किमूचुरित्यपेक्षायामुत्तरं वाक्यमवतार्य तस्यार्थमाह । त्वमिति । प्रतीकग्रहणे व्यग्रतया साधिर्न कृतः । उद्गीथपरीक्षां प्रक्रम्य कथमौद्गात्रे कर्मणि वाङ्नियुज्यते । उद्गीथे हि भक्तिविशेषे सा नियोक्तव्येत्याशङ्क्याऽऽह । उद्गीथ इति । इहशब्देन हन्तेत्यादिवाक्योक्तिः ॥ १२९ ॥

स्तोत्रेणास्याभिसंबन्धाद्भक्तिमात्रं न तु क्वचित् ॥
वागभिमानिनी चेह वाक्शब्देनाभिरुच्यते ॥ १३० ॥

उक्तेऽर्थे हेतुमाह । स्तोत्रेणेति । अस्यार्थः—उद्गीथेनात्ययाम त्वं न उद्गायेत्यादौ चोदितस्योद्गीथस्य प्रकरणित्वादथातः पवमानानामिति पवमानास्यस्तोत्रेणास्य संबन्धप्रतीतेस्तत्र चोद्गीथभेकरनवकाशात्स यत्र प्रस्तुयात्तदेतानि जपेदिति चोद्गीथभक्तिव्यतिक्रम्योद्गानमात्रसंबन्धित्वेनाङ्गभूतजपकर्मविधानादत्राप्युद्गीथशब्देन भक्तिमात्रं न विवक्षितमिति । किंचास्मिन्प्रकरणे क्वचिदपि वाक्ये भक्तिमात्रमुद्गीथपदेन नोच्यते तन्मात्रस्यानुपास्यत्वादुद्गीथोपासनस्य चात्र विवक्षितत्वान्न चोद्गानस्यापि नोपास्यत्वमित्यविवक्षितत्व तदनुवादेन तद्देवतोपासनस्येष्टत्वान्नचोद्गीथो नाम सामावयवो भक्तिविशेषो नोद्गानमिति भाष्यविरोधस्तत्र प्रकरणाविरुद्धार्थानुवादेन प्राणस्योद्गीथत्वविधानादित्याह । भक्तिमात्रमिति । ननु चेतनस्यैव भृत्यादेश्चेतनेन राजादिना नियोगदर्शनादचेतनेन चक्षुरादिना कथमचेतनाया वाचो नियोग इत्याशङ्क्येह वागादय शब्दा इत्यत्रोक्तं स्मारयति । वागिति । इहशब्दस्ते ह वाचमित्यादिवाक्यविषय । अथ ह प्राणमूचुरित्यादिपर्यायेष्वपि प्राणादिशब्दानां देवतावाचित्वं चशब्देन समुच्चीयते । तामेव विदानष्टि । अग्निरिति । अग्निर्वाग्भूत्वा मुखं प्राविशदिति श्रुतेरग्निरेव वागभिमानिनी देवता सा चात्र ग्राह्या प्रसिद्धासंभवस्य वक्ष्यमाणत्वादित्यर्थः ॥ १३० ॥

विषयोऽध्येषणाया हि चेतनावान्यतो मतः ॥
उपासिक्रियया योगो देवताया इहेष्यते ॥ १३१ ॥

ये तु देवतामचेतनामाचक्षते तान्प्रत्याह । विषय इति । लोकेऽध्येषणाविषयश्चेतनश्चैत्रो दृष्टो वाकोद्गायेत्यध्येषणाविषयोऽतश्चेतनत्वं वाग्देवताया निश्चितमित्यर्थः । चेतनस्याध्येषणाविषयत्वे लौकिकपरीक्षकादिप्रतिपत्तिं वक्तुं हिशब्दः । वाचो देवतात्वे हेत्वन्तरमाह । उपासीति । उपास्तिप्रकरणमिहशब्दार्थं ॥ १३१ ॥

अतोऽपि देवतैवेह वाक्शब्देनाभिधीयते ॥
कर्तुः पुरुषार्थत्वादेवता हीश्वरा परा[1] ॥ १३२ ॥

उक्तहेतुफलमाह । अतोऽपीति । अध्येषणाविषयत्वसमुच्चयार्थोऽपिशब्दः । इहशब्दस्तु पूर्ववत्प्रस्तुतवाक्यविषय । वागुपास्तेरग्निभावस्य फलत्वाच्च वाक्शब्देन तदह-

1 क. ख. 'माणा।

णमित्याह । तद्भूतेरिति । कथं तद्भावस्य गुणभूतेत्याशङ्क्य देवताया निरतिशयैश्वर्यशालित्वादित्याह । देवतेति ॥ १३२ ॥

सैवातः प्रतिपत्तव्या सर्वासु ध्यानभूमिषु ॥
न त्विह प्रतिपत्तव्याः करणस्थानगोचराः ॥ १३३ ॥

ते ह वाचमित्यादिपर्यायोक्तन्यायादय ह प्राणमित्याद्युत्तरपर्यायेष्वपि देवतैव प्राणादिशब्दवाच्येत्याह । सैवेति । वागादिशब्दैरिन्द्रियाणामेव रूढिवशाद्ग्रहणं किं न स्यादित्याशङ्क्याऽऽह । न त्विति । इहेति प्रकृता ध्यानभूमयो गृह्यन्ते ॥ १३३ ॥

पारार्थ्याचेतनत्वाभ्यां मर्त्यत्वाच्चापि कारणात् ॥ १३४ ॥
एवं वागादयः शब्दा देवतार्थाभिधायिनः ॥
सर्वत्र प्रतिपत्तव्या यत्रोपासा विवक्षिता ॥ १३५ ॥

तत्र हेतुमाह । पारार्थ्येति । अनीश्वरत्वादिसंग्रहार्थोऽपिशब्दः । अस्मिन्प्रकरणे वागादिपदानां देवतार्थत्वमुक्त्वा समानार्थे प्रकरणान्तरेऽपि तुल्यमेतदिति न्यायं संसरति । एवमिति । अतिप्रसक्तिं वारयति । यत्रेति ॥ १३४ ॥ १३५ ॥

जपमन्त्राभिधेयेयं वागित्येवं विनिश्चिताः ॥
उपासांचक्रिरे देवा एषैवोद्गीथदेवता ॥ १३६ ॥

वाग्देवतानिर्वर्त्यमौद्गात्रं कर्मेति भाष्ये वाचि देवताशब्दं प्रयुञ्जानस्य भाष्यकृतो मतमुक्तम् । वाग्देवताया नोपास्यत्वं जपमन्त्रप्रकाश्यत्वादित्याशङ्क्याऽऽह । जपेति । असतो मा सद्गमयेत्यादिमन्त्रैरियमेव वागभिधेया । एषैव चोद्गीथदेवतेतिनिश्चयवन्तो देवा वाचमुद्गातृबुद्ध्योपासितवन्त इत्यर्थः ॥ १३६ ॥

देवाभ्युदय उद्गानं देवेभ्योऽर्थाय वागियम् ॥
यथाशक्त्युदगायच्च यो भोगो वाङ्निबन्धनः ॥ १३७ ॥

तथेत्यादिवाक्यतात्पर्यमाह । देवेति । देवानामभ्युदये विवक्षिते तदुपायस्तावदुद्गानमतः स्वशक्तिमनुसृत्यैषा वागर्थिभ्यो देवेभ्योऽर्थायोद्गानं कृतवतीत्यर्थः । यो वाचीत्यादेरर्थमाह । तमिति ॥ १३७ ॥

येन भोगेन वाग्देवांश्चक्षुरादीनहर्निशम् ॥
साक्षादवति तं भोगमुदगायदशेषतः ॥ १३८ ॥

कोऽसौ वाङ्निबन्धनो भोगो यः साधारणः सर्वेषां प्राणानामित्याशङ्क्याऽऽह । येनेति । उपकारो भोगः । वाग्देवताभिवदनप्रयुक्तमुपकारमशेषकार्यकारणसाधारणमुदगायदित्यर्थः । उद्गीथदेवताधीनं संघातस्य सदा जीवनमिति द्योतयति । अहर्निशमिति । तज्जीवनस्य तदधीनत्वं प्रत्यक्षमिति वक्तुं साक्षादित्युक्तम् ॥ १३८ ॥

**पवमानेषु सोद्गात्री याजमान यथाविधि ॥**
**फलमुद्गाय शेषेषु सुदगायदथाऽऽत्मने ॥ १३९ ॥**

किमिदमुद्गान याजमानमेव किंवाऽऽर्त्विज्यमपि नाऽऽद्य । अथाऽऽत्मनेऽन्नाद्यमागायेदित्येतद्विरोधाद्द्वितीये तु केषु स्तोत्रेषु याजमानमुद्गान केषु चाऽऽर्त्विज्यमिति बुभुत्सायामाह । **पवमानेष्विति** । यथाविधि लक्षणशास्त्रमनतिक्रम्येति यावत् । ज्योतिष्टोमे द्वादश स्तोत्राणि तत्र पवमानाख्येषु त्रिषु याजमानमेवोद्गान कर्मफलस्योत्सर्गतो यजमानगामित्वात्परिशिष्टेषु नवसु स्तोत्रेष्वार्त्विज्यमपि तत्रोद्गातु फलसम्बन्धस्याऽऽत्मनेऽन्नाद्यमागायेदिति वाचनिकत्वादित्यर्थ । उक्तहेतुद्योतनार्थो हिशब्द । यथा यजमानार्थमुद्गायत्तथा स्वार्थमपीत्यथशब्दार्थ ॥ १३९ ॥

**स्तोत्रेषु परिशिष्टेषु वागागायदथाऽऽत्मने ॥**
**यत्कल्याणं वदत्येषा ह्यात्मने तदचीक्लृपत् ॥ १४० ॥**

यदुक्त शेषेष्वित्यादि तदेव स्फुट्यते । **स्तोत्रेष्विति** । याजमानस्योद्गानस्य त्रिषु स्तोत्रेषु कृतत्वादिति हिशब्दार्थ । अवशिष्टेषु स्तोत्रेषु स्वार्थगानस्यावसर दर्शयितुमथेत्युक्तम् । एव विभागमुक्त्वा किं तदात्मार्थमागीतमित्यपेक्षायामाह । यदिति । नवसु स्तोत्रेषु कल्याणवदन कार्यमृत्विगर्थमागीतमित्यर्थ । उक्तकार्यस्य करणान्तरेष्वसभवप्रसिद्ध्यर्थो हिशब्द ॥ १४० ॥

**यथाशास्त्र यथायोग वर्णदोषविवर्जितम् ॥**
**वर्णोच्चारणसामर्थ्य ममैवास्तु तदीदृशम् ॥ १४१ ॥**

कीदृश कल्याणवदन तदाह । **यथेति** । व्याकरणादिलक्षणशास्त्रोक्तक्रमेण ताल्वादिस्थानसम्बन्धानुरोधेन चातिद्रुतत्वादिदोषहीन यथा भवति तथा वर्णानामुच्चारणे सामर्थ्यं कल्याणवदन तदार्त्विज्यमेवेत्यर्थ ॥ १४१ ॥

**कल्याणवदनोत्थ यत्कृत्स्न देवेभ्य एव तत् ॥**
**फल वदनमात्र तु वाच एव न दैविकम् ॥ १४२ ॥**

कथ तर्हि पवमानेषु याजमानमेवोद्गानमुक्त तस्योक्तरूपवदनानुप्रवेशादित्याशङ्क्योक्त याजमानमुद्गान व्यनक्ति । **कल्याणेति** । यथोक्तवदनोत्थ कार्यं पवमानेषु याजमानमेव नाऽऽर्त्विज्य वचनाभावादित्यर्थ । आर्त्विज्यमुद्गान निगमयति । **वदनमात्रमिति** । यथा वदनमात्रेण तद्विशेषेण चोत्पन्न कार्यं पवमानेषूत्सर्गतो याजमानमेवेत्युक्त तथा वदनात्मक सर्वमपि कार्यं स्तोत्रान्तरेष्वार्त्विज्यमेव न याजमानमित्यर्थ । अथवा याजमानमार्त्विज्य च विभज्योक्तमागानमनेन वार्तिकेन निगम्यते । यद्धि कल्याणाकल्याणवदनजनित कार्यं तदशेषमपि देवतार्थं याजमानमेव न पुनरार्त्विज्यम् । यत्तु कल्याणा

---

१ घ `ज्यमिति च' ।

कल्याणवदनं तदार्त्विज्यमेव न याजमानमिति योजनीयम् । यथाश्रुतग्रहेऽपि न विरोधोऽस्तीति नातीव प्रयतितव्यम् ॥ १४२ ॥

तमस्युत्सार्यमाणे तु वाचोद्गात्रा सुरद्विषाम् ॥
स्वाधिकाराच्च्याव्यमानास्ते विदुर्देवहृद्गतम् ॥ १४३ ॥

ते विदुरित्यस्यार्थमाह । तमसीति । यदा वागुद्गायत्तदोद्गात्रा वाग्रूपेणोपास्यमानेनासुराणामविवेकपूर्वके बले कामक्रोधादौ निरस्यमाने तदपचयलिङ्गेन स्वविषयस्वाभाविकज्ञानकर्मभ्यश्च्याव्यमाना देवद्विषो देवाभिप्रायं ज्ञातवन्त इत्यर्थः । पराभिप्रायप्रतिपत्तिप्रारम्भार्थस्तुशब्दः ॥ १४३ ॥

अनेन वाचोद्गात्रा नो बलं ध्वान्तं नु देवताः ॥
ज्योतिषा स्वेन निर्जित्य यास्यन्त्यग्न्यादिरूपताम् ॥ १४४ ॥

किं तद्देवहृद्गतं यदसुरैरवगतं तदाह । अनेनेति । ध्वान्तं तत्पूर्वकं कामादि । ज्योतिः शास्त्रीयं ज्ञानादि ॥ १४४ ॥

महन्नो भयमायातमिति क्षुब्धिरेऽसुराः ॥
कर्मण्यनुचिते तेषां प्रक्षीणमनसां तदा ॥
वदनादावभिव्यङ्ग आत्मसंभावनादभूत् ॥ १४५ ॥

असुरबलनिरासेन वागादिदेवतानामग्न्यादिरूपत्वे हीनबलानामसुराणां स्वरूपहानिः स्यादतो देवपराभवे यतितव्यमित्यसुराशयमाविष्करोति । महदिति । असुरा इति च्छेदः । रागाद्यपचयलिङ्गेनासुराणां सुराशयधियं प्रदर्श्य श्रुत्युक्तलिङ्गेनापि तेषां तद्धियं वक्तुं पातनिकां करोति । कर्मणीति । स्वेतरदेवैरौद्गात्रे कर्मणि नियुक्तानां वागादीनां स्वात्मनि संभावनावशादन्वयव्यतिरेकाकुशलानामसुरसंनिधावेवायोग्ये कल्याणवदनादावासक्तिर्जाता तस्य चायोग्यत्वं स्वमात्रसंबन्धितेत्यर्थः ॥ १४५ ॥

यत्कल्याणमिति च्छिद्राद्विदुः सुरचिकीर्षितम् ॥
अनेन वै न उद्गात्रा वाचाऽत्येष्यन्ति स्वं वपुः ॥ १४६ ॥

संप्रति श्रुत्युक्तमसुराणां सुराभिप्रायज्ञानलिङ्गमाह । यदिति । यत्कल्याणं वदति तदात्मार्थमित्यत्र कल्याणवदनासङ्गरूपाद्देवताछिद्रादसुरायकाशादसुरा सुराभिप्रायं विदुरित्यर्थः । तदेव सुरचिकीर्षितं विषयमसुराणां विज्ञानं दर्शयति । अनेनेति । वाचोद्गात्राऽस्मानतीत्य स्वं वपुरग्न्याद्यात्मत्वमेष्यन्तीति संबन्धः ॥ १४६ ॥

इति ज्ञात्वा ह्यभिद्रुत्य स्वैरासङ्गशरोर्मिभिः ॥
विविधुस्तानथोद्गातॄंस्ते विद्धास्तत्यजुः क्रियाः ॥ १४७ ॥

आसुरं ज्ञानमनूद्य तमभिद्रुत्येत्यादेरर्थमाह । इति ज्ञात्वेति । ज्ञानस्याभिगमनि-

---

१ क. ख ग. रित्यु° ।

दानत्वसाधनार्थो हिशब्दः । प्राणादिष्वपि समनमासुरासङ्गपाप्मपीडनमिति मत्वा तानि-त्युक्तम् । आसङ्गपाप्मवेधस्य वैदिकानुष्ठानत्यागे हेतुत्वमथेत्युक्तम् । आसुरासङ्गग्रस्ताना वागादीनां वैदिकज्ञानकर्मभ्यो वैमुख्यं फलितमाह । ते विद्धा इति ॥ १४७ ॥

नानादन्यस्य सामर्थ्यं विद्यतेऽसुरनाशने ॥ १४८ ॥
अनेनामतिरूपेण वचसा कार्यशायिना ॥
पाप्मादिदोषसंपर्कः कारणस्योऽनुमीयते ॥ १४९ ॥

वागादिदेवतानामुपास्यमानानामसुरनाशकत्वसंभवात्कथं तासां पाप्मविद्धतया शास्त्रीयज्ञानादिवैमुख्यमित्याशङ्क्याऽऽह । नेत्यादिना । नहि मुख्यमाणादन्यस्य वागादेरसुरनिरासे सामर्थ्यमस्ति परिच्छेदाभिमानवत्त्वेनासुरपक्षनिवेशादित्यर्थः । तथाऽपि प्राजापत्यासु प्रजासु न पाप्मवेधो युक्तः कारणे तदभावादन्यथाऽऽकस्मिकत्वापत्तेरित्याशङ्क्याऽऽह । अनेनेति । प्राजापत्यप्रजावर्गगतेनानुभूयमानेनासत्यासभ्यवादादिना लिङ्गेनानुमितनद्गतपापादिना कारणात्मकप्रजापतिस्थोऽपि पापादिसंबन्धोऽनुमीयते । विमतं पापादिपूर्वकं प्रतिकूलधीविषयत्वाद्दु:खवत्तच्च कारणपूर्वकं कार्यत्वाद्घटवत् । न च प्रजागतं दुरितादि विना हेत्वन्तरादेव स्यात्कारणानुविधायित्वात्कार्यस्येत्यर्थः ॥ १४८ ॥ १४९ ॥

व्युत्थायाऽऽख्यायिकारूपाच्छ्रुतिः स्ववपुषाऽधुना ॥
आचष्टे कारणे दृष्टं कार्यगेणासुरात्मना ॥ १५० ॥

आनुमानिकेऽपि दर्शितेऽर्थे श्रुतिसंवादाभावादविश्रम्भमाशङ्क्य स य इत्यादिवाक्यमवतारयति । व्युत्थायेति । वाग्देवताया नोपास्यतेति निश्चित्यार्थवादभावाद्वैमुख्येनोत्थिता श्रुति स्वेनैव विद्यमानवादिरूपात्मना सौत्र पापादि तत्कार्ये प्रजासु दृष्टानुमानुमितं तद्वतासुरासङ्गपाप्मलिङ्गेनाऽऽहेत्यर्थः । उक्तेऽर्थे श्रुत्यनुसारिणो विश्वासोत्पादनविवक्षायामित्येतदधुनेत्युक्तम् ॥ १५० ॥

दृष्टेनामतिरूपेण कार्यगेणानुमीयते ॥
कारणे पाप्मवेधोऽभूयो वाचि प्राक्प्रजापतेः ॥ १५१ ॥

नन्वनृतादिकार्यस्याध्यक्षत्वात्प्रजासु पाप्मवेध कल्प्यते । सूत्रे तु कल्पकाभावान्न तत्कल्पना । न च कार्यत्वानुमानं कल्पकं कार्यस्य कारणमात्रादेव सिद्धेर्न च कारणानुविधायित्वात्कार्यस्य तत्रापि पापादिसिद्धिस्तत्कारणे परस्मिन्नपि प्रसङ्गादत आह । दृष्टेनेति । पूर्वकल्पयजमानावस्थस्य प्रजापतेर्वाग्वि पाप्मवेधो योऽभूत्स कार्यगतानुमितपापलिङ्गेन तत्र कल्प्यते न च तत्कारणेऽपि परस्मिन्प्रसङ्गोऽपापविद्धमितिश्रुतेर्न च न ह वै देवान्पाप गच्छतीतिश्रुतेर्न सूत्रेऽपि पापवेधस्तस्य पूर्वकल्पस्थापापत्वेऽपि यज-

---

१ ख. °न्द्.। प्राणा°।

मानावरूपस्य तद्भावाच्च ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्तीतिश्रुतेरिति भावः ॥ १५१ ॥

**स यो वाच्यसुरैः क्षिप्तः पाप्मा कार्ये स दृश्यते ॥**
**प्रमाविरोधि यद्वाक्यं तत्तत्कार्यसमाश्रयम् ॥ १५२ ॥**

स य इत्यादि व्याख्यातुं भूमिकामारचय्य व्याचष्टे । स य इति । यः स पाप्मा प्रजापतेर्वाचि प्रागसुरैरुपक्षिप्तः स तत्कार्ये प्रजावर्गे लिङ्गेनानृतादिना गम्यत इत्यर्थः । यदेवेदमित्यादि व्याकुर्वन्प्रजावर्गे गम्यमानं पाप्मानमेव स्फुटयति । प्रमेति । नानृतं वदे-दित्यादिनिषेधशास्त्रविरुद्धं यदसत्यवादादि तत्तस्य प्रजापतेः कार्यभूतप्रजानिष्ठं दृष्टं तेना-नुमितः स पाप्मेत्यर्थः ॥ १५२ ॥

**स एव स इति श्रुतिः कार्यकारणसंस्थयोः ॥**
**प्रजासु साक्षाद्यः पाप्मा यश्च तत्कारणाश्रयः ॥ १५३ ॥**

स एव स पाप्मेत्यस्यार्थमाह । स एवेति । तयोर्लोकवेदप्रसिद्धत्वद्योतनार्थो हि-शब्दः । तावेव पाप्मानौ विशिनष्टि । प्रजास्विति । यः प्रजास्वसत्यादिना पाप्मा स्पष्टो दृष्टो यश्चासौ तासां हेतुभूतसूत्रवाङ्निष्ठः स एव सः । तथा चाऽऽद्यसकाराभ्यां कारणस्थं पाप्मानमनूद्य तस्यैव कार्यस्थत्वमुच्यते । उत्तराभ्यां तु कार्यस्थं पाप्मानमनूद्य तस्यैव कारणस्थत्वं विवक्षितमिति भावः ॥ १५३ ॥

**घ्राणं चक्षुस्तथा श्रोत्रं मनश्चैवमनुक्रमात् ॥**
**चत्वारो देवा यथा वाणी विद्धाः सर्वे तथाऽसुरैः ॥ १५४ ॥**

वाग्देवताया जपमन्त्रप्रकाश्यत्वमुपास्यत्वं च नेति निर्धार्याथ ह प्राणमित्यादिपर्या-यचतुष्टयस्य तात्पर्यमाह । घ्राणमिति । अनुक्रमात्पाठक्रमानुसारेणेत्यर्थः । तथा वाग्दे-वतावदिति यावत् ॥ १५४ ॥

**कर्मेन्द्रियाणां सर्वेषां वागेवात्रोपलक्षणम् ॥**
**चक्षुःश्रोत्रे धीन्द्रियाणां मनो बुद्धेस्तथैव च ॥ १५५ ॥**

उक्तैरिन्द्रियैरनुक्तेन्द्रियाण्युपलक्षणीयानीत्याह । कर्मेति । अत्रेति प्रकृतः संदर्भो गृह्यते । चक्षुःश्रोत्रे घ्राणसहिते उक्तत्वाविशेषात् । धीन्द्रियाणामिति त्वग्जिह्वयोरेव वृत्तिभेदाद्बहूक्तिः । वागादि दृष्टान्तयितुं तथैवेत्युक्तम् । चकारस्त्वनुक्तचित्ताहंकारस-मुच्चयार्थः ॥ १५५ ॥

**कृत्स्नं जगदनादाय नैकस्यापीष्यते क्रिया ॥**
**प्राणस्य किमु वक्तव्यं कृत्स्नाध्यात्मेन्द्रियग्रहः ॥ १५६ ॥**

किमित्युक्तेन्द्रियैरनुक्तेन्द्रियाण्युपलक्ष्यन्त उक्तानामेव यथाश्रुति ग्रहणं किं न

१ ख. °व पाप्मा सः ।

स्यात्तत्राऽऽह । कृत्स्नमिति । एकस्यापि हेतोः सर्वजगदुपसंग्रह विना स्वकार्यकर्तृत्वं न प्रामाणिकमियं पृथिवी सर्वेषां भूतानां मध्विति श्रुतौ सर्वस्य सर्वत्र कारणताया वक्ष्यमाणत्वादेवं सत्येकस्येन्द्रियस्य स्वव्यापारकर्तृत्वे सर्वाध्यात्मिकेन्द्रियग्रहो नान्यथा कर्तृत्वमिति किं वक्तव्यं स्वकार्ये सर्वापेक्षस्य तस्याऽऽध्यात्मिकसर्वेन्द्रियापेक्षाया दुर्निवारत्वात्तद्युक्तमुपलक्षणमित्यर्थः ॥ १९६ ॥

यद्यपीदं जगत्कृत्स्नं गृह्यते संहतत्वतः ॥
तथाऽपि चोदितोऽत्रार्थ उपास्यो नाऽऽगतोऽर्थतः ॥ १९७ ॥

एकस्य व्यापारहेतुत्वेन सर्वजगदादाने वागादिवदत्रोपात्तं सर्वं जगदुपास्यं स्यादन्यथा वागादेरपि नोपास्यत्वमविशेषादित्याशङ्क्याऽऽह । यद्यपीति । वागादिव्यापारे सहकारित्वेन सबद्धत्वादशेषजगद्ग्रहेऽपि योऽत्र प्रकरणे वागादिरुपास्यत्वेनोच्यते तस्यैवोपास्यत्वं कार्योत्पत्त्यनुपपत्त्या लब्धस्य प्रपञ्चस्य नोपास्यत्वं यश्चार्थादर्थो न स चोदनार्थ इति न्यायादित्यर्थ ॥ १९७ ॥

कल्याणेतररूपेण परिशिष्टेष्वपीक्ष्यते ॥
विभाग आसुरो वेधस्तेन तेष्वनुमीयते ॥ १९८ ॥

उक्तैरनुक्तोपलक्षण साधितम् । ननु वागादिषूक्तेषु पाप्मवेधो ज्ञातो न च शिष्टेषु त्वगादिषु सोऽस्ति कल्पकाभावात्तत्कथमादिष्टे शिष्टोपलक्षण तत्राऽऽह । कल्याणेति । यस्मादनुक्तेष्वपि त्वगादिषु कल्याणस्पर्शनं तत्कृतं कार्यमित्यादिरूपेण कार्यभेदो दृष्टस्तस्मात्तेष्वपि पूर्वोक्तेष्विवाऽऽसुरपाप्मवेध कल्प्यते न्यायसाम्यात्तद्युक्तमुपलक्षणमित्यर्थ ॥ १९८ ॥

अतस्तदर्थमाहेयमेवम्विति पुनः श्रुतिः ॥
यथा वागादयो विद्धास्तद्वच्छेषास्त्वगादयः ॥ १९९ ॥

एवमित्यादिवाक्यमुक्तेऽर्थेऽवतारयति । अत इति । यतस्त्वगादिष्वपि पाप्मवेधोऽस्त्यत स चासावर्थश्च तदर्थस्त पाप्मवेधं त्वगादिष्वेषा श्रुतिर्वागादिषु सिद्धन्यायमुपनीयाऽऽहेत्यर्थ । न्यायसिद्धस्यार्थस्य श्रुत्या कथन न्यायस्य समूलत्वसिद्ध्यर्थमित्यभिप्रेत्य पुनरित्युक्ता श्रुतिं व्याचष्टे । यथेति ॥ १९९ ॥

सिद्धान्वागादिदृष्टान्तान्पुरस्कृत्यात्र उच्यते ॥
एवम्वित्युक्तशेषाणां पाप्मविद्धत्वसिद्धये ॥ २६० ॥

वागादिवत्त्वगादीनां पाप्मविद्धत्वे किं ज्ञापकमित्याशङ्क्य कल्याणेतररूपेणेत्यत्रोक्तं स्मारयति । सिद्धानिति । अत सत्सु दृष्टान्तेष्वनुमानसम्भवादिति यावत् । उक्तशेषाणामुक्तेभ्यो वागादिभ्यः शेषास्त्वगादयोऽनुक्तास्तेषामित्यर्थः । विमतं पाप्मानुविद्धं [illegible] इति भावः ॥ २६० ॥

अविध्यन्निति योऽर्थोऽस्य तद्व्याख्यानाय यत्यते ॥
स्वैः स्वैस्तानिन्द्रियासङ्गैः पाप्मभिस्त उपासृजन् ॥ १६१ ॥

पाप्मभिरुपासृजन्पाप्मनाऽविध्यन्नित्यनयोरस्ति पौनरुक्त्यमित्याशङ्क्याऽऽह । अविध्यन्निति । व्याख्यानव्याख्येयभावादपौनरुक्त्यमित्यर्थः । व्याख्यानवाक्यस्यार्थमाह । स्वैः स्वैरिति । कल्याणस्पर्शनं ममैवेत्यादिप्रकारैरित्यर्थः । तानिति त्वगादिदेवानां कर्मत्वोक्तिः प्रथमया त्वसुराणां कर्तृत्ववचनमिति विवेक्तव्यम् ॥ १६१ ॥

यत्संसर्ग पुरा चक्षुरविध्यंस्त्वदिहोच्यते ॥
या विद्धा देवतास्तासां प्रक्रियासंहृतिः पृथक् ॥ १६२ ॥

व्याख्येयवाक्यस्यार्थमाह । यदिति । पूर्ववाक्ये वागादिषु पापसंसर्गमसुराश्चक्रुरिति यत्तदेवोत्तरवाक्ये पाप्मनाऽविध्यन्नित्युच्यत इति योजना । एवमेता देवता इति व्यर्थमेवमु खल्वेता इत्यनेन गतत्वादित्याशङ्क्याऽऽह । या इति । या वागादिदेवता दर्शितन्यायेन पाप्मना विद्धास्तासां प्राणप्रकरणात्पृथगेव प्रक्रियायाः प्रकरणस्योपसंहृतिरेवमित्यादिना क्रियते तत्रास्य वैयर्थ्यमित्यर्थः ॥ १६२ ॥

आसङ्गपाप्मभिर्विद्धा यस्माद्वागादयोऽसुरैः ॥
वर्जनीयास्ततस्ताः स्युर्नोपास्याः श्रेय ईप्सुभिः ॥१६३॥

उपसंहृतप्रकरणस्य तात्पर्यमाह । आसङ्गेति । वागादीनां स्वप्राधान्येन नोपास्यतेति भावः ॥१६३ ॥

एवं निराशाः पूर्वासु देवतास्वसुरार्दनात् ॥
पारिशेष्यादथाऽऽजग्मुर्मध्यमं प्राणमादरात् ॥ १६४ ॥

वृत्तमनूद्याथ हेममित्याद्युत्तरं वाक्यमादत्ते । एवमिति । जपमन्त्रप्रकाशयत्वे ध्येयत्वे च नैराश्यमुक्तन्यायेन तासामसुरार्दनादप्राधान्यनिश्चयादिति हेतुः । प्रसक्तदेवतानिषेधाद्देवतान्तरस्य चाप्रसक्तादित्यागतिहेतुं वदन्नपेक्षितं निक्षिप्याथशब्दमवतारयति । पारिशेष्यादिति ॥ १६४ ॥

अथेत्यनन्तरोक्तिः स्यात्तथाऽभिनयद्वये ॥
इममित्यप्रसिद्धत्वात्प्राणस्येह त्वगादिवत् ॥ १६५ ॥

वागादिषु नैराश्यानन्तर्यमथशब्दार्थमाह । अथेति । इममित्यस्यार्थमाह । तथेति । विवक्षितार्थद्योतको देहतदवयवव्यापारविशेषोऽभिनयः । प्राणान्तरेष्वभिनयाभावादिहापि तद्वैयर्थ्यमित्याशङ्क्याऽऽह । अप्रसिद्धत्वादिति । इहेति देहोक्तिः । नहि देहे प्राणस्य करणग्रामवदायतनविशेषे प्रसिद्धिरतस्तदभिनयार्थवत्तेत्यर्थः ॥ १६५ ॥

अस्ति यस्मादसुर्नित्यमासन्योऽयमतो मतः ॥
वागादिभ्यो विभागार्थं विशेषणमसोरिदम् ॥ १६६ ॥

आसन्यमित्यस्यार्थोक्तिपूर्वकं फलमाह । अस्तीति ॥ १६६ ॥

जपमन्त्राभिधेयोऽत्र पारिशेष्यात्प्रतीयताम् ॥
उद्गीथदेवता प्राण इत्यभूत्सुरनिश्चयः ॥ १६७ ॥

केनाभिप्रायेण वागादयो मुख्यं प्राणमुपजग्मुरित्यपेक्षायामाह । जपेति । अत्रेति निर्धारणार्था सप्तमी । प्राणानां मध्ये प्राणो मुख्यो जपमन्त्रप्रकाश्य इति प्रतीयताम-न्यस्य तद्योगादसत्त्वाच्च चोद्गीथदेवतेति सुराणां निश्चयोऽभूदिति योजना । तत्प्रकाश्यो-द्गीथदेवतावशाद्वागादिनाशा देवा निश्चितवन्त । न च प्राणानां मध्येऽन्यतममप्य तदुभय-मस्ति तस्मात्पारिशेष्यान्मुख्यप्राणो मन्त्रप्रकाश्य उद्गीथदेवता चेति देवानां निश्चयोऽ-भूत्तेन तमुपजग्मुरित्यर्थ ॥ १६७ ॥

मन्त्रप्रयोगे सर्वेषां संनिधौ तत्प्रकाशितम् ॥
भास्मुत्तरहते वोढुं योऽन्यो यामस्तपाश्रयम् ॥ १६८ ॥

कथं मन्त्रप्रकाश्योद्गीथदेवतात्वं प्राणस्य सिद्धमित्याशङ्क्य मन्त्रार्थस्य तत्र पूर्णत्वा-दित्याह । मन्त्रेति । अन इति च्छेद ॥ १६८ ॥

परीक्षमाणास्ते प्राणं यथोक्ताख्यानवर्त्मना ॥
क्रमेणाऽऽसेदुरासन्यं प्राणं पाप्मपराभवात् ॥ १६९ ॥

वागादीनां मुख्यप्राणवदाश्रयानपेक्षत्वमाशङ्क्याऽऽह । परीक्षमाणा इति । परी-क्षाप्रकारमाह । यथोक्तेति । तत्कपरीक्षाया हेतुमाह । पाप्मेति । परीक्षापर्यवसान-माह । आसेदुरिति ॥ १६९ ॥

श्रेयोर्थिनां मनुष्याणामुपास्यप्रतिपत्तये ॥
इयमाख्यायिका चक्रुर्नान्यथोपास्यनिश्चितिः ॥ १७० ॥

यथोक्ताख्यानवर्त्मनेत्ययुक्तं श्रुतेरुपाख्याने तात्पर्याभावात्तत्प्रणयनानुपपत्तेरित्याशङ्क्यो-पास्यं निश्चेतुमाख्यायिका श्रुत्या प्रणीतेत्याह । श्रेयोर्थिनामिति । देवतोपास्त्यधिकारो मनुष्याणामेवेति वक्तुं मनुष्यग्रहणम् । उक्तमर्थं व्यतिरेकद्वारा दर्शयति । नान्य-थेति ॥ १७० ॥

यः प्राणे भोग इति न पूर्ववल्लभ्यतेऽत्र किम् ॥
वागादीनामिव यतो नासोर्भोगो विशिष्यते ॥ १७१ ॥

पूर्वत्र वागादौ यो वाचि भोग इत्यादिवदत्रापि प्राणे यो भोग इति वाच्य प्रकरण-वशादिति शङ्कते । यः प्राण इति । लिङ्गेन प्रकरणमङ्ग मन्वान समाधत्ते । वागा-दीनामिति । नहि प्राणस्य विशिष्टो भोगोऽस्ति तेन तस्य विशेषणानुपपत्ते तदपि प्रकरणमनुपपत्त्या बाधितमाकिंचित्करमित्यर्थ ॥ १७१ ॥

---

१ क. ख वोढुं ।

अकृत्स्नभोगतो युक्तं वागादिषु विशेषणम् ॥
सर्वस्यैवासुभोगत्वात्किं कुतोऽत्र विशिष्यते ॥ १७२ ॥

तर्हि तेषामपि प्राणवद्विशेषणानुपपत्तिरित्याशङ्क्य दृष्टान्तं स्पष्टयति । अकृत्स्नेति । वाचो हि वचनमेव भोगो न दर्शनादिश्चक्षुषो दर्शनमेव च न वदनादिरित्येवमशेषस्य वागादिभोगत्वाभावात्प्रातिस्विकं भोगमादाय यो वाचीत्यादिवचनमित्यर्थः । अस्तु तर्हि वागादिवत्प्राणेऽपि विशेषणमकृत्स्नभोगत्वाविशेषादित्याशङ्क्य दार्ष्टान्तिकं स्फुटयति । सर्वस्येति । दर्शनश्रवणादेरिति यावत् । किमिति कार्यं कुत इति हेतुश्चाऽऽक्षिप्यते । प्राणः सप्तम्यर्थः । उक्तं च—अप्रसिद्धत्वात्प्राणस्येह त्वगादिवदिति ॥ १७२ ॥

अभिसंधिरविव्यत्सन्नित्यभूत्सुरविद्विषाम् ॥
अनिष्पितक्रियारम्भोऽविव्यत्सन्निति भण्यते ॥ १७३ ॥

तमभिद्रुत्येत्यादौ क्रियापदं व्याकरोति । अभिसंधिरिति । अविव्यत्सन्नित्यनेनाऽसुराणां प्राणताडनेच्छा जातेत्युच्यत इत्यर्थः । तदेव स्फुटयति । अनिष्पितेति । अनिष्पन्नक्रिया पापसंसर्गहेतुरूपा तदारम्भस्तादिच्छा साऽत्राऽऽख्यातवाच्येत्यर्थः ॥ १७३ ॥

विव्यत्सोद्देशमात्रेण प्राणो हन्ता सुरद्विषाम् ॥
इत्यर्थप्रतिपत्त्यर्थमीदृग्दृष्टान्त उच्यते ॥ १७४ ॥

स यथेत्यादौ सशब्दार्थमाह । विव्यत्सेति । प्राणताडनेच्छोदयमात्रेण प्राणोऽसुराणां हन्तेत्यस्यार्थप्रतिपत्त्यर्थं वक्ष्यमाणप्रकारो दृष्टान्तः कथ्यत इत्यर्थः ॥ १७४ ॥

विभित्सायै यथा वेगाल्लोष्टः क्षिप्तोऽश्मनोऽन्तिकात् ॥
नश्येत्स्ववेगाच्छतधा ह्याखणाश्मसमागमात् ॥ १७५ ॥

यथेत्यादेरर्थमाह । विभित्साया इति । अश्मनो भेदनेच्छाया तदर्थं तत्समीपे स्थित्वा तस्मिन्नतिवेगक्षिप्तस्य पांशुपिण्डस्य स्वगतवेगवशेनानेकधा नाशो हेतुमाह । आखणेति । दुर्भेदशिलासंगमादित्यर्थः । उक्तार्थस्य लौकिकत्वं वक्तुं हिशब्दः ॥ १७५ ॥

अप्रधृष्यं तथा प्राणमृत्वा नेशुः सहस्रधा ॥
दैत्यास्तन्नाशतो देवा देवा एवाभवन्सदा ॥ १७६ ॥

एवं हेत्यादिदार्ष्टान्तिकं व्याचष्टे । अप्रधृष्यमिति । अधर्षणीयमतिगम्भीरमगोचरमसुराणामिति यावत् । ततो देवा अभवन्नित्यस्यार्थमाह । तन्नाशत इति । सदा देवा एव वागादयो देवताप्रतिबन्धकासुराणां मुख्यप्राणतो नाशात्परिच्छेदाभिमानं हित्वा देवा एवाभवन्निति यावत् ॥ १७६ ॥

अत एव मनुष्यत्वहेतवोऽप्यसुराः समम् ॥
विनेशुर्विष्वग्गतयो लोष्टः क्षिप्तो यथाऽश्मनि ॥ १७७ ॥

---

१ क. ग. °भित्सया य°। २ ख. °नेच्छया ।

विप्लवश्च इत्यस्यार्थं दर्शयन्दार्ष्टान्तिकं दृष्टान्तेन सह विवृणोति । अत इति । प्राणस्याधृष्यत्वादेव तस्माऽनेच्छामात्रेणासुरा मनुष्यत्वस्य स्थावरत्वादेश्च हेतवो देवत्वप्रतिबन्धका सर्वेऽपि युगपज्ञानागतयो नष्टा दुर्भेद्यशिलाक्षिप्तपांशुपिण्डवदित्यर्थः ॥ १७७॥

प्राणस्वभावसंपत्तेः प्राणवद्देवता अपि ॥
देवा एवाभवन्दैत्यकृतत्पाप्मविनाशतः ॥ १७८ ॥

तत इत्यादेरुक्तमेवार्थं विवृणोति । प्राणेति । वागाद्युपाधिकस्य यजमानस्य प्राणेऽहमहोपासनातस्तत्स्वरूपात्ते सर्वस्य परिच्छेदाभिमानरूपस्य पाप्मनो नाशात्प्राणवद्वागादय सदा देवतात्मानः सन्तोऽध्यात्मपरिच्छेदाभिमानप्रतिबन्धनिवृत्तावग्न्यादिदेवतात्वं भजन्तीत्यर्थः ॥ १७८ ॥

वागादीन्द्रियसंघातो यजमानो यथा पुरा ॥
प्राणात्मभावाद्धत्वाऽऽगो वैराजं रूपमाप्तवान् ॥ १७९ ॥

भवत्यात्मनेत्यस्यार्थं वक्तुं यथेत्यादिभाष्यतात्पर्यमाह । वागादीति । आध्यात्मिकपिण्डमात्रपरिच्छिन्नात्माभिमानाख्यं दुरितमागो विवक्षितम् । पुरेत्युपासनपरिपाकावस्थाकथनम् ॥ १७९ ॥

तथा यस्तमुपासीत यथोक्ताख्यानवर्त्मना ॥
विराजैवाऽऽत्मना हत्वा पाप्मं भवति सोऽचिरात् ॥ १८० ॥

तथेत्यादिभाष्यं व्याकुर्वन्वाक्यं योजयति । तथेति । पूर्वयजमानवदपोह्य वागादीनादाय प्राणं तद्रूपासनात्परिच्छिन्नाभिमानं हित्वा विराडात्मनोपासको भवतीत्यर्थः । प्रतिबन्धके पापेऽपयाते विराड्भावस्य न क्षेपोऽस्तीति विवक्षित्वोक्तमचिरादिति॥१८०॥

जीवाविष्ट उपास्योऽत्र देवताविग्रहः सदा ॥
प्राणो हिरण्यगर्भात्मा यावत्तदभिमानता ॥ १८१ ॥

ननु विराजो नोपास्यत्वमचेतनत्वादतो न तद्भावः फलं तत्राऽऽह । जीवेति । अस्मिन्प्रकरणे देवताविग्रहो विराडात्मा क्रियाशक्तिप्राधान्येन प्राणो ज्ञानशक्तिप्राधान्येन च हिरण्यगर्भश्चैतन्याभासाविशिष्टः सन्नेवैरन्तर्यामिभिरुपास्यो न तूपाधिरेवेत्युक्तं फलं युक्तमित्यर्थः । उपास्तेरवधिमाह । यावदिति । मनुष्योऽहमितिवत्तस्मिन्देवतात्मन्यहंभावस्याभिमानस्य भावो यावत्तावदुपास्तिरित्यर्थः ॥ १८१ ॥

भावनोपचयाद्धत्वा परिच्छेदं स्वमासुरम् ॥
देवतात्मानमेत्याशु सदा तद्भावभावितः ॥ १८२ ॥

परासिवत्प्राणासिरपि ज्ञानमात्रादित्याशङ्क्याऽऽह । भावनेति । शास्त्रादुपास्यं निश्चित्य तत्र भावनामुपचिनोति ततः स्वसबद्धमासुरं परिच्छेदाभिमानमाशु हत्वा सदा

१ ख. °रिच्छेदाभि° । २ ख. प्राणद्दि° । ३ क. ग. °भाविता ।

तस्मिन्नेव देवतात्मनि भावेन संस्कृतस्तमेव गच्छति तं तमेवैति कौन्तेयेत्यादिस्मृतेरित्यर्थः ॥ १८२ ॥

तत्तमोमात्रविध्वंसान्नतु प्राणादिराप्यते ॥
कार्यत्वात्कारणं मुक्त्वा न हि तत्कार्यसंभवः ॥ १८३ ॥

परस्मिन्प्रतीचि शास्त्रीयज्ञानात्तदज्ञानध्वंसमात्रेण तत्प्राप्तिवत्तस्मिन्प्राणादौ शास्त्रोत्थज्ञानात्तदज्ञानमात्रध्वस्तेर्न तत्प्राप्तिरिति व्यावर्त्यमाह । तत्तम इति । तत्र हेतुमाह । कार्यत्वादिति । प्राणात्मत्वस्य कार्यत्वात्कारणं विनाऽयोगादुपास्तेरुक्तकर्मणश्च तद्धेतुत्वान्न ज्ञानमात्रात्प्राप्तिरित्यर्थः ॥ १८३ ॥

देवो भूत्वेह देवोऽसौ भावनोपचयाद्भवेत् ॥
पुंव्यापारोद्भवत्वं नः श्रुत्याऽपि प्रतिपादितम् ॥ १८४ ॥

प्राणाद्यात्मत्वस्य ज्ञानमात्रानायत्तत्वे श्रुतिरपि मानमित्याह । देव इति । इहैव देहे भावनाप्रकर्षाद्देवभावमनुभूय देहपातादूर्ध्वमुपास्यो देवः स्यादित्यनया श्रुत्या पुंव्यापारसाध्यत्वमस्मान्प्रति प्राणादिभावस्योक्तमित्यर्थः । अपिशब्दो यथोक्तां स्मृतिमनुकर्षति ॥ १८४ ॥

ब्रह्मैवाप्येति ब्रह्मैव प्रागप्यासीयतोऽद्वयम् ॥
तन्मोहमात्रविध्वंसादित्यपि श्रुतिशासनम् ॥ १८५ ॥

तर्हि प्राणादिभाववत्परात्मभावोऽपि न ज्ञानमात्रादित्याशङ्क्याऽऽह । ब्रह्मैवेति । ब्रह्मण्येकीभावात्प्रागपि वस्तुतो ब्रह्मैव सञ्जीवो मोहाद्ब्रह्मवद्दृष्टो वाक्योत्थज्ञानात्तन्मात्रनिरासादद्वयं ब्रह्मैवाऽऽप्नोतीतिश्रुतेर्ब्रह्मप्राप्तिर्धीमात्रायत्ता सिद्धेत्यर्थः । जीवस्य ब्रह्मणोऽर्थान्तरत्वं निरसितुमद्वयमित्युक्तम् । अपिशब्दाद्विमुक्तश्चेत्यादिवाक्यान्तरं गृहीतम् ॥ १८५ ॥

स्वतःसिद्धौ तदन्येषां श्रुतिकोपः प्रसज्यते ॥
अतोऽन्यदार्तं तद्वच्चाप्येकमेवेति च श्रुतिः ॥ १८६ ॥

ब्रह्मभाववत्प्राणादिभावस्यापि स्वतःसिद्धेर्ज्ञानमात्रायत्तता युक्तेत्याशङ्क्याऽऽह । स्वत इति । तच्छब्देन ब्रह्मोच्यते । अतःशब्देनान्तर्यामिणोऽक्षरस्य वा निर्देशः । उक्तवाक्यवदेह नानेति प्राणादिद्वैतनिषेधकवाक्यस्य व्याकोपमाह । तद्वदिति । चकारेण मृत्योः स मृत्युमित्यादिद्वैतदृष्टिनिन्दानुपपत्तिं समुच्चिनोति । 'एको देवः सर्वभूतेषु' 'एक एव तु भूतात्मा' इत्यादिश्रुतिस्मृतिविरोधार्थोऽपिशब्दः । श्रुत्यन्तरविरोधमाह । एकमिति ॥ १८६ ॥

---

१ ख. 'तस्मात्' ।

नाव्याकृतादेः संसिद्धौ परमात्मातिरेकतः ॥
ब्रह्मवन्मानमस्तीह तथा निर्मोक्षवाऽऽपतेत् ॥ १८७ ॥

अव्याकृतादेर्नित्यसिद्धत्वे मानविरोधमुक्त्वा मानाभावमाह। नेत्यादिना। अर्वाक्त्वे येपल्कस्य सदेव सोम्येदमित्यादि ब्रह्मणि स्वात्म्येण सिद्धौ मानं दृष्टं न तथाऽव्याकृतसूत्रादेरनपेक्षत्वेन सिद्धौ मानमस्तीत्यर्थः। इहेति पूर्वसप्तम्या सबध्यते। किंचाव्याकृतादेरकल्पितत्वे वा कल्पितत्वे वाऽऽद्ये सदा संसारः स्यादित्याह। तथेति॥१८७॥

अथाऽऽत्माविद्याऽव्यक्तादिरूपेण मथते सदा ॥
तन्निवृत्तौ निवृत्तिः स्यान्निवृत्तिः केवलात्मता ॥ १८८ ॥

द्वितीयमुत्थापयति। अथेति। तत्र ज्ञानादज्ञानध्वस्तौ चाव्याकृतादेस्तद्विलासस्य ध्वस्तिः स्यादिति स्वपक्षसिद्धिमाह। तदेति। तथाऽपि तन्निवृत्तिरात्मनो भिन्नाऽभिन्ना वाऽऽद्ये द्वैतापत्तिर्द्वितीये भावाभावयोरेकत्वानुपपत्तिरित्याशङ्क्याऽऽह। निवृत्तिरिति। वाक्योत्थबुद्धिवृत्त्युपलक्षितचिदतिरेकेण कल्पिताव्याकृतादिभावाभावयोर्न सत्त्वं कल्पितसर्पस्य रज्जुतिरिक्तसत्त्वाभाववादृष्टेरित्यर्थः॥ १८८ ॥

प्राणस्यैव पराभूतो द्विषन्पाप्माऽऽसुरोऽखिलः[१] ॥
उपासीनस्य तं प्राणं कृत्स्नो नश्येत्तथाऽऽसुरः ॥
द्विषच्चाप्यद्विषच्छत्रुरासुरादन्य इष्यते ॥ १८९ ॥

प्राणभावस्य परात्मभावाद्वैफल्यमापाद्य पराऽस्येत्यादिवाक्यस्यार्थमाह। प्राणस्येति। द्विषन्निति विशेषणस्यार्थवत्त्वं वक्तुमासुरपाप्मेतरशत्रोर्द्वैविध्यमाह। द्विषन्निति। शत्रुशब्दः सापत्नविषयः ॥ १८९ ॥

नित्यविघ्नकृदेवैष प्राणाघ्नावासुरो मतः ॥
अतो विशेष्यते श्रुत्या द्विषन्भ्रातृव्यरूपया ॥ १९० ॥

आसुरे [२] शत्रौ न द्वैविध्यमित्याह। नित्येति। यस्मादासुरः शत्रुर्द्विषन्नेव तस्माद्द्विषन्भ्रातृव्य इत्येवरूपया श्रुत्या भ्रातृव्यं सापत्नं शत्रुर्द्विषन्निति विशेष्यते तद्विशेषणमर्थवदित्यर्थः ॥ १९० ॥

उक्तासुरपराभूतौ नान्योऽरिरवशिष्यते ॥
य एव वेदेति विधिः फलोक्तेरर्थवादतः[३] ॥ १९१ ॥

यथोक्तशत्रुनिराकरणेऽपि प्रतिबन्धान्तरसंभवात्तत्र प्राणात्मनेत्याशङ्क्याऽऽह। उक्तेति। यदाग्नेयोऽष्टाकपाल इतिवद्य एवं वेदेति प्रसिद्धार्थापकत्वेऽपि विधिपरं वाक्यमत्रैव विद्यादिति विद्याभिन्नमित्याह। य एवमिति। निर्धारणविशिनत्त्वे हेतुमाह।

१ क. ग. त्मना ॥ १८८ ॥ २ क. ग. °मित्यु। उ°। ३ क. °त्रौ द्वैवि।

फलोक्तेरिति । पूर्वोक्तार्थवादवशात्फलस्योच्यमानत्वाचद्वचनस्य च स्तुतित्वाद्विधिं विना च तदयोगादत्र सूत्राप्तिफलत्वेन विधीयते तदुपास्तिरित्यर्थः ॥ १९१ ॥

आनुषङ्गिफलोक्त्या वा तदुपासा विमुक्तये ॥
आत्मविद्याधिकारेऽस्मिंस्तदुपासाविधानतः ॥ १९२ ॥

यद्वा मोक्षफलत्वेन तदुपास्तिरत्र विधीयते । सूत्रभावस्तु फलार्थे बीजावापे छायागन्धादिवदानुषङ्गिकं फलमित्याह । आनुषङ्गीति । सूत्रोपास्तिस्तत्प्राप्तिद्वारा क्रममुक्तिफलेत्यत्र मानमाह । आत्मेति ॥ १९२ ॥

आत्मविद्योपकारित्वं तस्याद्वाक्याच गम्यते ॥ १९३ ॥
अथायास्याङ्गिरोदृग्भिर्विशिष्टमसुकर्मकम् ॥
उपासनं विधास्यामीत्यारभ्यैषोत्तरा श्रुतिः ॥ १९४ ॥

आत्मविद्याप्रकरणे सूत्रोपास्तिविधेस्तस्या मुक्तिफलं चेदात्मविद्यैव मुक्तिहेतुरिति नियमासिद्धिरित्याशङ्क्याऽऽह । आत्मविद्येति । सैव मुक्तिहेतुस्तद्धत्पस्युपकारित्वमुपासनस्य प्रकरणादित्यर्थः । उक्तोपनिषत्क इतो विमुच्यमानः क गमिष्यसीति वाक्याच्च क्रममुक्तिफलत्वं सूत्रोपास्तेर्गम्यते । अतो ब्रह्मविद्याद्वारा मोक्षे पर्यवसिता प्रकृतोपास्तिरित्याह । वाक्याचेति । फलवत्प्रधानोपास्तेरुक्तत्वात्ते होचुरित्याद्युत्तरवाक्यं गुणोपास्तिविधिपरमित्याशङ्क्य तस्य तात्पर्यमाह । अथेति । सफलप्राणोपासनोक्त्यानन्तर्यमथशब्दार्थः । ते होचुरित्यारभ्याथाऽऽत्मनेऽन्नाद्यमित्यस्मात्प्राक्तनं वाक्यमुत्तरा श्रुतिरित्युच्यते ॥ १९३ ॥ १९४ ॥

अनुवादाद्विधिर्ज्यायानत्रवादे वृथा श्रमः ॥
पुरुषार्थाभिसंबन्धादतो विधिरिहाऽऽश्रितः ॥ १९५ ॥

प्राणस्याऽऽङ्गिरसत्वादेर्लोकसिद्धत्वेनानूद्यत्वान्नोपास्यकोटिप्रविष्टतया विधेयतेत्याशङ्क्याऽऽह । अनुवादादिति । अनुवादस्यायुक्तत्वे हेतुमाह । अनुवाद इति । तत्पक्षे गुणवादस्य निष्फलत्वान्नानुवादो युक्त इत्यर्थः । विधेर्ज्यायस्त्वे हेतुमाह । पुरुषार्थेति । अनुवादस्यायुक्तत्वाद्विधेश्चोपपन्नत्वादाङ्गिरसत्वादिगुणकप्राणकर्मकोपास्तेर्विधेयत्वाद्गुणानामप्युपास्यकोटिनिविष्टतया विधेयोपास्तिकर्मतेति फलितमाह । अत इति ॥ १९५॥

श्रूयते फलसंबन्धो यासूपासासु तास्विह ॥
दध्नेन्द्रियादिवज्ज्ञेयो विधिर्गुणसमाश्रयः ॥ १९६ ॥

उपास्यतया गुणानां विधेयत्वे गुणविधिरेव किं न स्यादित्याशङ्क्याऽऽह । श्रूयत इति । दध्नेन्द्रियकामस्य जुहुयादित्यत्र प्रधानाग्निहोत्रस्य स्वर्गफलात्फलान्तरस्येन्द्रियपाटवस्य श्रुतत्वात्प्रधानानुवादेन गुणविधिरिति संकर्षग्रन्थे बोधितं तथेहोपास्तिप्रकरणे यासु गुणोपास्तिषु प्रधानफलात्फलान्तरं श्रूयते तासु गुणाश्रयो विधिर्यथा भर्ता श्रेष्ठः

अङ्गानां करणानां च रसः सारो यतस्ततः ॥
प्राण आङ्गिरसः प्रोक्तस्तद्विद्भिस्तद्गुणाश्रयात् ॥ २०७ ॥

अङ्गाना हि रस इति हेतुमादौ व्याकरोति । अङ्गानामिति । आङ्गिरस इति प्रतिज्ञा व्याचष्टे । तत इति । तत्रैव प्राणविदामनुभवं प्रमाणयति । तद्विद्भिरिति । अङ्गकरणसारत्वं प्राणगुणमाश्रित्य तस्याऽऽङ्गिरसत्वमिति हेत्वर्थमेन संक्षिप्याऽऽह । तद्गुणेति ॥ २०७ ॥

कथमाङ्गिरसः प्राण इत्यस्य प्रतिपत्तये ॥
अन्वयव्यतिरेकाभ्यामुपरिष्टात्प्रवक्ष्यते ॥ २०८ ॥

प्राणस्य नाऽऽङ्गिरसत्वमङ्गरसत्वासिद्धेर्वागादीनामन्यतमस्य तत्सारत्वसंभवादित्याह । कथमिति । तस्याऽऽङ्गिरसत्वाख्यप्रतिज्ञातार्थसिद्धयेऽङ्गरसत्वं हेतूकृतमन्वयव्यतिरेकाभ्यामग्रे स्पष्टी करिष्यत इत्याह । अस्येति ॥ २०८ ॥

तथाऽन्योऽपि गुणोऽस्य दूरिति प्रतिपाद्यते ॥
उदारफलसिद्ध्यर्थं सा वा एषेत्यतः श्रुतिः ॥ २०९ ॥

ननु सिद्धे प्राणस्योपास्यत्वे गुणा वाच्या न च तत्सिद्धं शुद्धेरसिद्धेर्नहि तस्याशुद्धवागादिसंबन्धिन शवस्पृष्टे तत्स्पृष्टस्येव सा सिद्धेत्याशङ्क्य सा वा एषेत्यादेस्तात्पर्यमाह । तथेति । आयास्यत्वादिपूर्वोक्तगुणवदिति यावत् । अस्य हि गुणस्योक्तौ प्राणस्योपास्यत्वं सिध्यत्यासङ्गपाप्माविद्धतयोक्तशुद्धिवाक्यादिति भाव । किं चोक्ते दूर्गुणे तद्विशिष्टप्राणोपास्तेरुत्कृष्टं फलं पापहानि सेत्स्यत्यतस्तस्य गुणस्य प्रतिपाद्यतेत्याह । उदारेति । गुणस्य वाच्यत्वमत शब्देनोक्त्वा तत्र श्रुतिमवतारयति । सा वा इति ॥ २०९ ॥

उपास्तिक्रमसिद्ध्यर्थं क्रमभङ्गोऽयमिष्यते ॥
यतोऽतोऽङ्गिरसं त्यक्त्वा दूरित्येवाभिधीयते ॥ २१० ॥

ननु प्राणस्याऽऽङ्गिरसत्वमादावुक्तमनन्तरं च सा वा एषेत्यादिना दूर्गुणत्वं तत्र प्रथमश्रुतमुपरिष्टात्प्रतिपादयिष्यति चरमश्रुतं दूरं हीत्यादिश्रुतिरादावेव प्रतिपादयति तत्र क्रमभङ्गे किं कारणं तत्राऽऽह । उपास्तीति । आदौ दूर्गुणो ध्येयोऽनन्तरमाङ्गिरसत्वमित्युपास्तिक्रमसिद्ध्यर्थं पाठक्रमभङ्गोऽङ्गीकृतः पाठक्रमादर्थक्रमस्य बलवत्त्वात्तस्मिन्ननुक्ते दूर्गुणे प्राणस्य शुद्धिसिद्धिर्न चाशुद्धस्योपास्यत्वम् । तस्मादग्निहोत्रहोमयवागूपाकक्रमवत्पाठक्रमातिक्रम इत्यर्थः । श्रौतक्रमभङ्गे सार्थकमोपादाने फलितमाह । यत इति ॥ २१० ॥

विशिष्टोपास्तिरेवेयं प्रधानफलकीर्तनात् ॥
नायं गुणविधिर्ज्ञेयस्तत्फलस्याश्रुतत्वतः ॥ २११ ॥

· तथाऽपि दध्यादिवत्फलविशेषसंबन्धाद्गुणविधिरेवायं न विशिष्टविधिरित्याशङ्कयाऽऽह । विशिष्टेति । प्राणोपास्तेः पापहानिर्देवताभावश्चेति द्विविधं फलम् । तत्र पापहानेस्तत्फलस्यैवात्र श्रवणादिति हेतुमाह । प्रधानेति । गुणविधित्वाभावे न्यायमिति-प्रतिज्ञापूर्वकं हेतुमाह । तत्फलस्येति । प्रधानफलात्फलान्तरस्याश्रुतेर्दध्यादिवैषम्यादित्यर्थः ॥ २११ ॥

क्रियायां गुणभूतोऽर्थो देवतेत्युपदिश्यते ॥
अस्त्युपास्तिक्रियायोगो देवताऽतोऽत्र उच्यते ॥ २१२ ॥

दूर्गुणविशिष्टप्राणोपास्तिरिह विवक्षितेत्युपपादितैव देवतेति प्राणे देवताशब्दप्रयोगात्तद्देवतात्वं दृष्टं कथं निर्वहतीत्याशङ्कयाऽऽह । क्रियायामिति । यागादौ कर्त्रतिरेकेण चेतनो गुणोऽग्न्यादिर्देवतेत्यर्थः । तथाऽपि कथं प्राणस्य तत्त्वं तत्राऽऽह । अस्तीति । न च तस्य कर्मत्वान्न गुणतेति युक्तं गुणशब्देन कारकस्य विवक्षितत्वात्तथा च प्राणस्य कर्त्रतिरिक्तचेतनत्वे सति क्रियाया कारकत्वाद्देवतात्वं युक्तमित्याह । देवतेति॥२१२॥

दूरमेवंविदः पाप्मा कथमध्यवसीयते ॥
एवंवित्त्वविरोधित्वाद्दूरं पाप्मा भवेदतः ॥ २१३ ॥

नित्याद्यनुष्ठानात्पापहानिर्यत्पापक्षयश्रुतेर्न चेदमुपासनं नित्यं नैमित्तिकं वा देवतात्मत्वकामिनो विधानात्तन्न पापमेवंविदो दूरे भवतीत्याक्षिपति । दूरमिति । फलोक्तिव्याख्यया परिहरति । एवमिति । नहि नित्याद्यनुष्ठानादेव पापक्षयो नियतस्तीर्थस्नानादेरपि तत्प्रसिद्धेः । तस्मादेवंवित्त्वेन पाप्मनो विरोधित्वादेवंविदः सकाशाद्दूरे भवत्येवासावित्यर्थः ॥ २१३ ॥

विषयेन्द्रियसंबन्धजो हि पाप्माऽऽसुरो यतः ॥
श्रौतानन्तादहंमानात्परिच्छिन्नो विरुध्यते ॥ २१४ ॥

उक्तमेव व्यनक्ति । विषयेति । विषयेष्विन्द्रियाणां संबन्धात्पाप्मा परिच्छिन्नोऽभिमानो जातः स यतः शास्त्रानपेक्षस्वाभाविकः समुल्लसत्यतः शास्त्रोत्थादपरिच्छिन्ने प्राणात्मन्यहंमानाद्विरुध्यते परिच्छिन्नापरिच्छिन्नाभिमानयोर्विरोधस्य प्रसिद्धत्वादित्यर्थः ॥ २१४ ॥

चक्षुरादिपरिच्छेदः प्राकृतज्ञानहेतुतः ॥
युक्तोऽध्यात्मैकरूपस्य बाधः शास्त्राभिमानतः ॥ २१५ ॥

नन्वभिमानयोर्विरोधित्वाविशेषाद्बाध्यबाधकत्वव्यवस्थायोगाद्द्वयोरपि मिथो बाधः स्यात्तत्राऽऽह । चक्षुरादीति । प्राकृताज्ज्ञानात्कर्मणश्च यश्चक्षुरादौ परिच्छेदोऽभिमान-

1 क ग. तुक. । गु ।

विशेषो वृत्तस्तस्याध्यात्मैकरूपस्य पिण्डमात्रे स्थितस्य शास्त्रोत्थापरिच्छिन्नात्मप्राणाभिमानाद्बाधो युक्त इति योजना ॥ २१९ ॥

परिस्पन्दात्मिका वृत्तिः श्रोत्रादिष्वपि विद्यते ॥
प्राणस्यागेन्द्रियाणां तु शब्दाद्यर्थावलेहिनी ॥ २१६ ॥
शब्दादिग्राहिणी वृत्तिः स्वैरासङ्गात्मपाप्मभिः ॥
दूषिता न परिस्पन्दो दूरं मृत्युरसोस्ततः ॥ २१७ ॥

प्राणस्य पापासम्बन्धे तदभिमानिनस्तदात्मकस्यापि पापासम्बन्धसिद्धिर्न च प्राणस्य तदसंबन्धोऽसिद्धः प्राणत्वादितरप्राणवत्तत्सम्बन्धानुमानादित्याशङ्क्याऽऽह । परिस्पन्देति । प्राणस्य चलनरूपा वृत्तिरपरिच्छिन्ना सर्वदेहव्यापिनीति न पापदूषितेत्यर्थः । प्राणान्तरवृत्तिरपि तथैवेत्याशङ्कते । अथेति । तुशब्देन शङ्का व्यावर्तयन्नाह । इन्द्रियाणां त्विति । वागादीनां शब्दादिग्राहिणी वृत्तिस्तन्मात्रं गोचरयति । नहि वाचा दर्शनं चक्षुषा वा वदनं तथा च परिच्छिन्नैव तद्वृत्तिरित्यर्थः । तथाऽपि पाप्मस्पर्शास्पर्शयोरुभयत्र तुल्यतेत्याशङ्क्य परिच्छेदस्य पाप्मफलत्वात्तद्दूषिता परिच्छिन्ना वागादिवृत्तिरित्याह । स्वैरिति । धर्मफलत्वादपरिच्छेदस्य प्राणवृत्तिरपरिच्छिन्ना न पापदूषितेत्याह । नेति । एवमनुमानासंभवे प्राणस्य पापसम्बन्धाभावं फलितमाह । दूरमिति ॥ २१६ ॥ २१७ ॥

मृत्युर्दूरं यथा प्राणात्तदात्मत्वात्तथाऽऽसुरः ॥
तद्विदश्च भवेन्मृत्युर्दूरमित्युपदिश्यते ॥ २१८ ॥

पापासम्बन्धं प्राणस्योक्त्वा तद्विदोऽपि तं निगमयति । मृत्युरिति । यथा पूर्वोक्तन्यायात्प्राणादासङ्गरूपो मृत्युर्दूरे भवति तथा तद्विदोऽप्यसौ दूरे स्याद्विदुषः सदा तद्भावनया तदात्मत्वादतो दूरमित्यादिफलोक्तिरविरुद्धेत्यर्थः ॥ २१८ ॥

दिशामन्त इह प्राच्यो मध्यदेशोपलक्षितः ॥
अनन्ताकाशदेशत्वान्नाञ्जसाऽन्तो दिशां यतः ॥ २१९ ॥

सा वा एषेत्यादेरपहत्येत्यन्तस्य सङ्गतां दृष्ट्वा यत्राऽऽसामित्यादौ दिशामन्त इत्यस्यार्थमाह । दिशामिति । इह वाक्ये दिक्शब्देन मध्यदेशो गृह्यते । तेनोपलक्षितो व्यावर्तितस्तदन्तास्तद्व्यतिरिक्तो देश इत्यर्थः । प्राच्यादीनां दिशामवसानमेव दिगन्तपदवाच्यं किं न गृह्यते तत्राऽऽह । अनन्तेति । अत पूर्वोक्त एव दिशामन्त इति शेषः ॥ २१९ ॥

श्रुतिस्मृतिसदाचारसंस्कृताशयवर्जनम् ॥
अवधीकृत्यान्तवोक्तेर्नतु दोषो मनागपि ॥ २२० ॥

१ ग. 'मैषणा' । २ क ख ग. 'दृष्टमवमं' ।

आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोरितिप्रसिद्धमध्यदेशस्य मध्यदेशशब्देन ग्रहे तदितरदेशमात्रस्य पापीयस्त्वं प्रामाणिकप्रसिद्धिविरुद्धमित्याशङ्क्याऽऽह । श्रुतीति । शास्त्रप्रसिद्धानिन्दिताचारसंस्कृतमनोजनो मध्यदेशः प्रसिद्धस्यापि तदधिष्ठितत्वेन मध्यदेशत्वात्तत्राप्यन्त्यजाधिष्ठितदेशस्य पापीयस्त्वस्वीकारादतस्तज्जनं तदधिष्ठितं च देशमवधिं कृत्वा तदितरजनस्य तदध्युषितदेशस्य चान्तत्वोक्तेर्मध्यदेशादन्यो देशो दिगन्त इत्युक्ते कुतो विरोध इत्यर्थः ॥ २२० ॥

मध्यदेशावधिस्तस्माद्दिगन्त इति गृह्यते ॥
मात्यन्तिकजनोदेशः पापीयोजनसंश्रयात् ॥
वर्ज्यतेऽतः प्रयत्नेन तद्विद्भिरधुनातनैः ॥ २२१ ॥

तर्हि मध्यदेशशब्दस्यानेकार्थतेत्याशङ्क्याऽऽह । मध्येति । यस्मादुक्तो विशिष्टो जनो मध्यदेशस्तदधिष्ठितदेशस्तदुपचारात्तस्मात्तदितरो जनस्तदाश्रयो देशश्चास्मिन्वाक्ये दिगन्तो ग्राह्य इत्यर्थः । यथोक्तस्य दिगन्तत्वेऽपि किमायातमित्याशङ्क्य तस्य विशिष्टैस्त्याज्यत्वमित्याह । मात्यन्तिकेति । अत्यन्तो दर्शितो मध्यदेशातिरिक्तो म्लेच्छदेशस्तन्निवासिना जनेनोद्दिश्यते स्वनिवासत्वेनाधिष्ठीयते यो देशः स प्रचुरपापवतां दुर्जनानामाश्रयत्वाद्विवेकिभिर्वर्तमानैरपि शिष्टैः सर्वात्मना त्यज्यते किं पुनः पूर्वैरित्यर्थः । अतःशब्दस्य पूर्वपद्येन संबन्धः ॥ २२१ ॥

तेषु मत्यन्तदेशेषु तन्निवासिषु चाऽऽसुरान् ॥
यतो विन्यदधात्माणस्तस्मात्तद्वर्जयेद्द्वयम् ॥ २२२ ॥

उक्तेऽर्थे हेतुत्वेन तदासामित्यादि योजयति । तेष्विति । आसुरान्पाप्मन इति शेषः ॥ २२२ ॥

जनो विशिष्टो देशेन देशो जनविशेषितः ॥
पाप्मोपसृष्टमुभयं शिष्टास्तद्वर्जयन्त्यतः[1] ॥ २२३ ॥

द्वयमित्यस्यैवार्थं विशदयति । जन इति । तस्य त्याज्यत्वे पूर्वोक्तं हेतुं स्मारयति । पाप्मेति । पापसृष्टत्वात्तदुभयं विशिष्टा यतो वर्जयन्त्यतोऽन्यैरपि यत्नेन त्याज्यमित्याह । शिष्टा इति ॥ २२३ ॥

समाहारोऽथवा भेदो नेदित्येतत्पदं भवेत् ॥
अनीप्सितानिवृत्तिः स्यात्समाहारेऽविवक्षिते ॥ २२४ ॥

नेदित्यादेरर्थं वक्तुं विभागमाह । समाहार इति । पदद्वयपक्षे विवक्षितमर्थमाह । अनीप्सितेति । यदा पदमखण्डमविवक्षितं नञ्पदमित्पदं चेति पदद्वयमिष्टं तथा सत्यनीप्सितस्यानिष्टस्यानिवृत्तिर्वाक्यार्थः स्यादित्यर्थः ॥ २२४ ॥

[1] क. ग. कथ्यते ।

इत्थं न चेदहं कुर्यां प्रतिषेधश्रुतीरितम् ॥
अन्ववायानि पाप्मानं प्रतिषेधातिलङ्घनात् ॥ २२५ ॥

तत्र वाक्यं योजयति । इत्थमिति । तस्मान्न जनमित्यादिनिषेधवाक्योक्तं निषेधश्रुत्यनुसारेण यदि न पालयेयं तदा निषेधातिक्रमात्पाप्मनुगच्छेयं तथानिष्टमिति निषेधवाक्यार्थपालनं कार्यमित्यर्थः ॥ २२९ ॥

इति भेदविवक्षायां व्याख्या कार्या पदद्वये ॥
माऽर्यस्तु तथाऽभेदे व्याख्येयः प्रतिषेधकृत् ॥ २२६ ॥

भेदविवक्षाया पदद्वये सत्येव निषेधवाक्यसंबन्धेनास्य वाक्यस्य व्याख्येति निगमयति । इति भेदेति । अखण्डपक्षे तु माऽर्यो निषेधको नेच्छब्दो व्याख्येयस्तथा गति मा पाप्मानमनुगतः स्यामिति मत्वा निषेधवाक्यार्थं रक्षेदित्याह । माऽर्यस्त्विति ॥ २२६ ॥

सामान्यविषयश्चायं निषेधो नानिवृत्तः ॥
बलवत्प्रक्रियातो हि वाक्यं सामान्यमात्रगम् ॥ २२७ ॥

प्राणोपास्तिप्रकरणे निषेधश्रुतेस्तेनैवाथ निषेधोऽनुष्ठेयो न सर्वैरित्याशङ्क्याऽऽह । सामान्येति । अनविप्राणवित्तदुपासितेति यावत् । प्रकरणात्प्राणविद्विषये निषेधे गम्यमाने कथं तस्मान्न जनमित्यादिवाक्यात्तस्य सामान्यविषयतेत्याशङ्क्य श्रुतिलिङ्गादिसूत्रे प्रकरणाद्वाक्यस्य बलवत्त्वनिश्चयादित्याह । बलवदिति । अस्यार्थः—श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् । अत्र वाक्यप्रकरणयोर्विरोधोदाहरणं दर्शपौर्णमासयोः सूक्तवाकनिगदे सन्ति पौर्णमास्यमावास्यादेवतावाचीनि पदान्यग्नीषोमाविदं हविरजुषेतामिन्द्राग्नी इदं हविरजुषेतामित्यादीनि । तत्र किमेष मन्त्रवर्णः पौर्णमास्याममावास्यायां च द्वि प्रयोक्तव्य किंवा यस्य येनैकवाक्यता ॥ तत्रेति संशये वाक्यप्रकरणयोस्तुल्यबलत्वाद्वाक्यादात्मीयस्य प्रयोगः प्रकरणाच्चेतरस्येति कृत्स्नस्यैव मन्त्रस्योभयत्र प्रयोग इति पूर्वपक्षे शब्दैकवाक्यभावस्य शीघ्रभावित्वात्प्राकरणिकविनियोगस्य काल्पनिकत्वेन विप्रकृष्टत्वाद्वाक्यस्य बलीयस्त्वात्त प्रकरणादुभयत्र विनियोग इति तृतीये स्थितम् । तथाच प्रकृतेऽपि प्रकरणाद्वाक्यस्य बलीयस्त्वात्ततो निषेधस्य सामान्याधिकृतमात्रविषयता युक्तेति ॥ २२७ ॥

आसुरेणावरुद्धांस्तान्वागादीन्हतपाप्मनः ॥
देवत्वं प्रापयत्प्राणः कथमित्येतदुच्यते ॥ २२८ ॥

प्राणोपासेरुक्तं पापक्षयफलमङ्गीकृत्याग्न्यादिदेवतात्मिकफलमास्थियति । आसुरेणेति । वागादिषु स्थितेषु नष्टेषु च तेषां देवत्वप्रापणं प्राणस्याशक्यमिति भावः । स्थिते-

---

१ क 'तंभूर्ण' ।

प्येव तेषु वस्तुतो देवतात्मसु परिच्छेदाभिमानप्रतिबन्धध्वस्तिमात्रेण देवत्वप्रापणं प्राणस्य संभवतीत्येतदनन्तरग्रन्थेनोच्यत इत्याह । एतदुच्यत इति ॥ २२८ ॥

ज्ञानतोऽज्ञानहानिः स्याद्देवत्वं भावनाबलात् ॥
आनन्तर्ये क्रियाद्वित्वादथशब्दो भवेद्ध्रुवम् ॥ २२९ ॥

अथेत्याद्यवतारितं वाक्यं व्याकरोति । ज्ञानत इति । ध्येयज्ञानात्तदज्ञाननाशस्तत-स्तस्मिन्भावनाप्रकर्षाद्ध्येये देवताभाव । एवं ज्ञानभावनाक्रिययोर्भेदाज्ज्ञानानन्तर्येऽर्थे प्रयुक्तोऽथशब्दः । ततो भावनासामर्थ्यादुपासकोपाधिभूतवागादिदेवता मृत्युमतीत्याग्न्या-दिभावमुपासकात्मा भवन्प्राणो नीतवानित्यर्थः । उक्तेऽर्थे निश्चयो ध्रुवमित्युच्यते॥२२९॥

मृत्युमत्यवहत्प्राणः सामान्योक्तेर्विशेषतः ॥
विशिष्टदेवताव्याप्तिर्वागादीनां प्रपञ्च्यते ॥ २३० ॥

पूर्ववाक्येनैव वागादीनामग्न्यादिभावस्योक्तत्वादुत्तरवाक्यवैयर्थ्यमित्याशङ्क्यार्थभेद-माह । मृत्युमिति । वागादिदेवता मृत्युं पाप्मानमतीत्याग्न्यादिभावं प्राणः प्रापयति स्मेति सामान्येन तासां देवताभावस्योक्तत्वाद्वाचोऽग्नित्वं प्राणस्य वायुत्वमित्यादिविशे-षणविशिष्टदेवतारूपताऽनन्तरग्रन्थेन विभज्यत इत्यर्थः ॥ २३० ॥

नेदीयसी यतोऽन्येभ्यो वागेवोद्गीथकर्मणि ॥
प्राणस्य तेन सोद्गातुः प्रथमेत्यभिधीयते ॥ २३१ ॥

स वै वाचमेव प्रथमामित्यत्र वाचः प्राथम्यं प्राधान्यं तत्कथमित्याशङ्क्याऽऽह । नेदीयसीति । औद्गात्रे कर्मणि साधकतमत्वेन प्राणस्योद्गातुरत्यन्तसंनिहितत्वात्कर-णान्तरेभ्यो वाचः प्राधान्यमित्यर्थः ॥ २३१ ॥

वागाद्यग्न्याद्यवाप्त्यैवं पाप्मनोऽपास्य सर्वतः ॥
वैराजं पदमेत्येवं यजमानः सुभावितः ॥ २३२ ॥

वागादीनामग्न्याद्याप्तावप्युपासकस्य किमायातं नहि तदेव तस्य फलमित्याश-ङ्क्याऽऽह । वागादीति । देवतात्मप्रतिबन्धकात्पाप्मनः सर्वाशिरस्योक्तवर्त्मना वागा-दीनामुपासकोपाधिभूतानामग्न्याद्याप्त्यैव सोऽपि सदा प्राणात्मत्वेन ध्यायन्भावनाबला-द्वैराजं प्राणाख्यं पदं पूर्वयजमानवदाप्नोतीत्यर्थः ॥ २३२ ॥

कल्याणासङ्गसंबन्धाद्वागाद्यधर्मकारणम् ॥
त्यक्त्वाऽन्नं मुख्यमात्मानमाश्रयेन्मृत्युवर्जितम् ॥ २३३ ॥

प्रकरणार्थं संक्षिपति । कल्याणेति । अधर्मस्य कारणं स वा कारणमस्येति तदो-क्तम् । मुख्यप्राणाश्रयणं तस्मिन्विशेषणत्रयविशिष्टं ध्यानं तत्र हेतुमाह । मृत्युवर्जि-तमिति ॥ २३३ ॥

वागाद्यैः पञ्चभिर्युक्तं विराजं साधिभौतिकम् ॥
हित्वाऽध्यात्मपरिच्छेदं ततस्तं प्रतिपद्यते ॥ २३४ ॥

वागादीनपास्य मुख्यं प्राणमाश्रयेदित्युक्तत्वात्तेषां सर्वथाऽनुपास्यत्वमाशङ्क्याह वागाद्यैरिति । पञ्चभिरिति तेषामेव पाठापेक्षयोक्तं त्वगादिभिरित्यपि द्रष्टव्यम् । मुख्यप्राणस्य मृत्युवर्जितत्वार्थं विशिनष्टि । विराजमित्यादिना । साध्यात्मिकमित्यपि द्रष्टव्यम् । सर्वजगदात्मकमिति यावत् । आश्रयेदिति संबन्धः । अपरिच्छिन्नप्राणध्याने फलं तं यथा यथेत्यादिश्रुतिसिद्धमाह । तत इति ॥ २३४ ॥

साधिभूताधिदैवं च नामरूपक्रियात्मकः ॥
सूत्रं प्राणोऽङ्गिराः सत्यमृक्सामेत्यत्र उच्यते ॥ २३५ ॥

तस्यापि वागादिवत्परिच्छिन्नत्वात्कथं तदुपासितुरपरिच्छिन्नफलाप्तिरित्याशङ्क्य प्राणस्यापरिच्छिन्नत्वं विराजमित्यादौ सूचितं साधयति । साधिभूतेति । नपुंसकं सूत्रेणाध्याहृतप्रपञ्चेन च पुमान्संबध्यते । अध्यात्माधिदैवाधिभूतसहितं व्याप्तकं जगत्प्राणोऽभिधीयते श्रुतावित्यर्थः । तत्र क्रियात्मत्वं पदद्वयेनाऽऽह । सूत्रमिति । रूपरूपत्वं पदाभ्यामाह । अङ्गिरा इति । नामात्मत्वमाह । ऋगिति । ऋक्सामयोर्ग्रहणं यजुषामुपलक्षणम् ॥ २३५ ॥

तमेकं सर्वभूतेषु ज्ञानकर्मफलाश्रयम् ॥
आत्मभावात्मविज्ञानादुपास्ते यः स तं व्रजेत् ॥ २३६ ॥

प्राणस्यापरिच्छेदमुक्त्वा तदुपासितुस्तत्प्राप्तेरपरिच्छिन्नता युक्तेति फलितमाह । तमेकमिति । आश्रयशब्दः स्वरूपवाची तात्पर्यावसानभूमिविषयो वा । स्वभावे प्राणात्मन्यहमस्मीत्यभिमानज्ञानाविर्भावपर्यन्तमित्युपास्तेरवधिमाह । आत्मभावेति ॥ २३६ ॥

उक्तमभ्युदयार्थं यद्वागादीनामथाधुना ॥
आगानमवशिष्टेषु स्तोत्रेषूद्गातुरुच्यते ॥ २३७ ॥

अथाऽऽत्मनेऽन्नाद्यमित्यादेर्वृत्तमनूद्य तात्पर्यमाह । उक्तमित्यादिना । वागाद्युपाधिकस्य यजमानस्य यदभ्युदयार्थमागानं तत्त्रिषु पवमानेषूक्तमित्यनुवादार्थः । अधुनेत्यथशब्दार्थः । ननु स्तोत्रेष्वागानसाध्यं फलमार्त्विज्यमेव वचनादित्याह । आगानमिति ॥ २३७ ॥

सामान्यभोज्यविषयस्त्वन्नशब्दो यतस्ततः ॥
आद्यमित्युच्यते तस्य विशेषणतया वचः ॥ २३८ ॥

अन्नाद्यशब्दयोरेकार्थतया पुनरुक्तिमाशङ्क्यार्थभेदमाह । सामान्येति । तस्यैव संग्रहत्वं विशेषणेन विवक्षितम् ॥ २३८ ॥

यत आदाविदं दृष्टमन्नागानमनात्मनि ॥
तस्मात्तत्कार्यभूतासु प्रजास्वद्यापि दृश्यते ॥ २३९ ॥

न केवलं प्रजापतावन्नस्वीकारे श्रुतिरेव मानं किंतु कार्यभूतप्राणिष्वन्नस्वीकारं दृष्ट्वा कारणेऽपि तदनुमेयं कारणानुसारित्वात्कार्यस्येत्याह । यत इति । अनात्मनि प्राणात्मनीत्यर्थः । दृश्यते स्वार्थमन्नस्वीकरणमिति शेषः ॥ २३९ ॥

यद्धि किंचेति सर्वार्थमेवेत्यत्रावधारणम् ॥
प्राणेनैव तु तत्सर्वं लोकोऽन्नं ह्यत्ति सर्वदा ॥ २४० ॥

यद्धीत्यादिवाक्यस्थपदानि व्याचष्टे । यद्धीति । वाक्यार्थमाह । प्राणेनेति । प्राणद्वारकमेवान्नात्तृत्वं लोकस्यान्वयव्यतिरेकसिद्धमिति हिशब्दार्थः ॥ २४० ॥

अन्नोपकारः सर्वेषामविशिष्टः समीक्ष्यते ॥ २४१ ॥
अथावधारणं कस्मादनेनैवेति भण्यते ॥
प्राणद्वारक एवैषामुपकारो न तु स्वतः ॥ २४२ ॥

इह प्रतितिष्ठतीत्यस्य शङ्कामाह । अन्नेति । प्राणेनैवाद्यते सर्वमन्नमित्यवधारणमयुक्तं वागादीनामप्यन्ननिमित्तोपकारदृष्टेरिति चोद्यं दूषयति । भण्यत इति ॥ २४१ ॥ ॥ २४२ ॥

कथं तद्द्वारकस्तेषामुपकार इतीर्यते ॥
ननु दूरिति हि प्राण उक्तो वागादिवत्कथम् ॥
आत्मार्थान्नाद्यसंगीतेर्विद्धो नाऽऽसुरपाप्मभिः ॥ २४३ ॥

वागादीनामन्नकृतोपकारो न प्राणद्वारको नियामकाभावादिति शङ्कते । कथमिति । तत्र नियामकत्वेनानन्तरवाक्यमादत्ते । इतीर्यत इति । तस्यैव शङ्कान्तरमाह । नन्विति । यथा वागादयः स्वार्थागानादासङ्गपाप्मविद्धास्तथा प्राणोऽपि स्वार्थमन्नाद्यागानात्कथमासुरपाप्माविद्धो न चास्तु तस्यापि तद्वेधो दूरित्युक्तत्वादित्यर्थः ॥२४३॥

स्थितिमात्राभिसंबन्धान्नायं दोष इहेष्यते ॥ २४४ ॥
असावन्नं स्थितं यस्मादिहेदं प्राणानवस्थतः ॥
यत्नाच्छ्रुतिरतो वक्ति स्विहान्नं प्रतितिष्ठति ॥ २४५ ॥

इह प्राणे पाप्मवेधो दोषो नोद्भाव्यः सर्वसाधारणस्थित्यर्थतया तेनान्नस्वीकारात्प्राणस्थित्यधीना हि वागादिस्थितिरित्यात्मविशेषणमिति मत्वा परिहरति । स्थितीति । वागादीनामन्ननिमित्तोपकारस्य प्राणद्वारकत्वाद्युक्तमवधारणमित्याद्ये पक्षे वाक्यं योजयति । असाविति । असाविहशब्दार्थे प्राणे स्थितं सदन्नं स्थूलं देहमितरांश्च प्राणान्पालयति तस्मादिहेत्याद्या श्रुतिरन्नं प्राणे प्रतिष्ठितमिति तात्पर्येण वक्ति तद्वागादीनां प्राणसंबन्ध्यन्नाधीनस्थितित्वादवधारणमित्यर्थः ॥ २४४ ॥ २४५ ॥

स्थितिमात्रं ह्यसोरत्नं यद्वासङ्गो न शङ्क्यते ॥
भर्ता श्रेष्ठः पुरो गन्ता ह्यन्नादोऽधिपतिस्तथा ॥
इत्यादिगुणविध्यर्थं परो ग्रन्थोऽवतार्यते ॥ २४६ ॥

सर्वसाधारणस्थित्यर्थान्नयोगात्प्राणस्य पाप्मवेधो नेत्यस्मिन्निद्वर्तायं परो वाक्यं विभजते । स्थितीति । इहान्ने देहाकारपरिणते प्राणस्तिष्ठति तद नुसारिणश्च वागादयः स्थितिमान्तोऽतः स्थित्यर्थं प्राणस्यान्नमिति तस्मिन पाप्मवेध इत्यर्थः । ननु विधिप्रभेदस्य प्रागेवोक्तत्वात्किमुत्तरग्रन्थेनेत्याशङ्क्याऽऽह । भर्तेति । ध्येये प्राणे यथोक्तगुणानां श्रुतिवशादपि प्रतिपत्त्यर्थो हिशब्दः । आदिपदेन स्सुवर्णादिग्रहः । परो ग्रन्थस्ते देवा अब्रुवन्नित्यादिरथात. पवमानानामित्यत: प्राक्तन. ॥ २४६ ॥

अयं गुणविधिर्ज्ञेयः प्रत्येकं तत्फलश्रुतेः ॥ २४७ ॥
जग्धमन्नं यतो देहलिङ्गभावेन याति नः ॥
परिणामं ततस्तस्मादेतावदिति भण्यते ॥ २४८ ॥

तत्र ते देवा इत्यादेः सोऽयास्य इत्यत: प्राक्तनस्य तात्पर्यमाह । अयमिति । तत्र हेतु. प्रत्येकमिति । एकैकस्मिन्गुणे विध्यनुकूलस्य प्रधानफलातिरिक्तस्य फलस्य दृष्यादाविव श्रवणादिति हेत्वर्थः । अस्तराणि व्याकुर्वन्नेतावदित्यादेरर्थमाह । जग्धमिति । अस्माकं हि भुक्तमन्नं काळादिना पाकं गच्छद्देहद्वयस्थापकत्वेन तिष्ठति । तस्माद्देहद्वयस्थितिकरमेवान्नं नान्यदस्तीत्यर्थः ॥ २४७ ॥ २४८ ॥

त्वयैवाऽऽत्मार्थमागीते त्वय्येवाश्रयतोऽखिलम् ॥
वयं चान्नमृते स्थातुं नालं क्षणमपीश्वर ॥ २४९ ॥

तदात्मन आगासीरित्यस्यार्थमाह । त्वयेति । आत्मार्थमेव यथा तथाऽन्नागाने त्वया कृते त्वय्येव स्थितिकरं तदखिल स्यादतोऽस्माकं तद्वैत्वयासिद्धिरित्यर्थ. । मा भुञ्जतामन्नमथ च स्थितिरात्मवदित्याशङ्क्याऽऽह । वयं चेति । पादप्रसारणन्याय वारयति । क्षणमपीति । स्वामिनि भृत्येनाऽऽत्मीयाऽऽपन्निवेद्येति लौकिकन्यायं सूचयति । ईश्वरेति ॥ २४९ ॥

संतर्प्यातः स्वमात्मानमनेनास्मानपीश्वर ॥
आभाजयस्व क्षुधितांश्छान्दसत्वाण्णिचोऽश्रवः ॥ २५० ॥

अनु नोऽस्मिन्नित्यादेरर्थमाह । संतर्प्येति । अन्नं विनाऽवस्थातुमशक्यत्वमत.शब्दार्थ । स्वयमेव भजन्तो भागमन्नस्य भजन्तामित्याशङ्क्य स्वाधितत्वादस्माकं नैवमित्याह । ईश्वरेति । अनुग्राह्यतां द्योतयति । क्षुधितानिति । आभजस्वेति श्रूयमाणे कथमन्यथार्थकथनमिति तत्राऽऽह । छान्दसत्वादिति ॥ २५० ॥

---

१ क. ग. शक्यते ।

मामृतेऽन्नं न वः शक्तं पोढुं क्षणमपि क्वचित् ॥
अन्नार्थिनोऽतो मां सर्वेऽप्यभिसंविशताऽऽशु वै ॥ २५१ ॥

ते वै माऽभिसंविशतेत्यस्यार्थमाह । मामिति । किमुवक्तव्यत्वन्यायं वक्तुं क्षणमपीत्युक्तम् । क्वचिदिति देहोक्तिः । स्वातन्त्र्येणान्नस्य वागादिपोषकत्वासंभवोऽत्र शब्दार्थः । सर्वेशानस्य विचारानपेक्षत्वमाशुशब्देनोच्यते । वैशब्दोऽवधारणे । स्वकप्राणस्यान्नभक्षणाद्वागादिस्थित्यनुपलब्धेरन्नार्थिनां तेषां प्राणं परिवेष्टयावस्थानमित्यर्थः ॥ २५१ ॥

तेनैता देवताः सर्वास्तृप्यन्त्यन्नेन सर्वशः ॥
इत्यर्थस्य कुतः सिद्धिरिति चेदुच्यते यतः ॥ २५२ ॥

तयेत्यादेः स्पष्टत्वात्तेनेत्यत्र शङ्कते । तेनेति । प्राणद्वारा लोकेन यदन्नं भुक्तं तेन सर्वा देवता वागाद्या[1] सदा तृप्यन्तीत्युक्तम् । न हि चैत्रे भुक्तवति मैत्रस्तृप्यतीत्यर्थः । श्रुतिभाष्याभ्यां बहिरेव समाधत्ते । उच्यत इति । यस्मात्प्रकारादुक्तार्थसिद्धिः स प्रकार उच्यत इति योजना ॥ २५२ ॥

त्रिधा जग्धं भवत्यन्नं परिणामविशेषतः ॥
स्थवीयान्मध्यमोऽणीयानित्येवं कालतोऽशितः ॥ २५३ ॥

अन्नमशितं त्रेधेत्यादिश्रुत्यन्तरमनुसरन्युक्तिप्रकारं प्रकटयति । त्रिधेति । त्रैविध्ये हेतुमाह । परिणामेति । त्रैविध्यमुदाहरति । स्थवीयानिति । पाकहेतुमाह । कालत इति ॥ २५३ ॥

स्थवीयान्यात्यधोभागो रसादिक्रमशोऽपरः ॥
स्थूलं ह्युपचिनोतीमं कुड्यं मृत्स्नेव सर्वदा ॥ २५४ ॥

उक्तानां भुक्तान्नभागानां विनियोगविशेषं प्रकृतोपयोगित्वेन वदन्नादौ स्थवीयसो भागस्य पुरीषत्वेनाधोगतिमाह । स्थवीयानिति । मध्यमो भागस्त्वगादिक्रमेण स्थूलदेहोपचयं करोतीत्याह । रसादीति । स्थूलदेहस्यान्नोपचितत्वे प्रसिद्धिं प्रमाणयितुं हिशब्दः । कथं स्थूलो देह इत्यपेक्षाया प्रत्यक्षतया तस्य सुज्ञानत्वमाह । इममिति । सर्वदेति क्रियापदेन संबध्यते । उपचये दृष्टान्तमाह । कुड्यमिति । प्रशस्ता संस्कृता मृन्मृत्स्नोच्यते ॥ २५४ ॥

यस्त्वणीयान्रसः सूक्ष्मः स ऊर्गमृतमुच्यते ॥
नाडीः सूक्ष्माः प्रविश्यासौ देवताः प्रीणयत्यथ ॥ २५५ ॥

तृतीयान्नभागरूपमाह । यस्त्विति । श्रुतिस्मृतिष्वमृतादिशब्दितस्याणीयसो भागस्य कार्यमाह । नाडीरिति । देवताशब्देन वागादयो गृह्यन्ते । न केवलं द्वासप्त-

[1] क. सर्वदा ।

तिसहस्रनाडीप्रवेशमात्रं किंत्वसौ प्रविश्य देवताप्रीतिमपि करोतीत्यपिशब्दार्थेऽथशब्दो व्याख्येय ॥ २९५ ॥

स्वाम्यर्थ एव चोत्तम्भस्तृप्तिरापूर उच्यते ॥
ततस्तु या सुखोद्भूतिर्विज्ञानात्मन एव सा ॥ २९६ ॥

अणिष्ठो रसो नाडीरनुप्रविश्य करणसमुदायं प्रीणयतीत्युक्तमिदानीमन्नरसेनाऽऽत्मनोऽपि प्रीतिदर्शनात्तद्वत्तस्य भौतिकत्वापत्तिरित्याशङ्क्याऽऽह । स्वामीति । कार्यकरणसंघातोऽत्र स्वामी तस्यार्थस्तावदन्ननिमित्त उत्तम्भ स्थितिरपतनं तुष्टक्षुपचयौ च तन्निमित्तौ तदर्थावेव नाऽऽत्मनोऽन्नरसविकारनिमित्तं किंचित्कार्यं तत्कुतोऽस्य भौतिकत्वमित्यर्थः । अन्नप्रयुक्तमुत्तम्भादि कार्यकरणसंघातस्य चेत्तत्प्रयुक्तं सुखमपि तस्यैवेति तच्चैतन्यापत्तिः सुखस्य चेतनधर्मत्वादित्याशङ्क्याऽऽह । ततस्त्विति । अन्नोपयोगस्तत्प्रयुक्तोत्तम्भादिर्वा तच्छब्दार्थः । अन्नस्याचेतनत्वेन सुखायतनत्वायोगादित्यर्थः ॥२९६॥

ता एता देवताः सप्तदश ज्ञानक्रियात्मिकाः ॥
सोऽयं सप्तदशग्रामो भोक्तुः करणलक्षणः ॥ २९७ ॥

अणिष्ठो रसो नाडीषु प्रविश्य यासां देवतानां प्रीतिमादधाति तासां रूपमाह । ता इति । सप्तदशसंख्यावकरणग्रामस्य चेतनस्येव स्वातन्त्र्यमाशङ्क्याऽऽह । सोऽयमिति ॥ २९७ ॥

बुद्धीन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाण्यपि ॥
वायवः पञ्च बुद्धिश्च मनः सप्तदशं विदुः ॥ २९८ ॥

तमेव सप्तदशसंख्याकं करणग्रामं भोक्तृशेषभूतं परिगणयति । बुद्धीति । त्वक्चक्षुःश्रोत्रजिह्वाघ्राणानि पञ्च बुद्ध्यर्थानि वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि प्राणापानव्यानोदानसमाना वायवो मनो बुद्धिरित्यन्तःकरणद्वयमिति सप्तदशको ग्रामो लिङ्गशरीरमित्युच्यते । इदं च लिङ्गशरीरं विवेकिनामेव शक्यज्ञानमित्याह । विदुरिति ॥ २९८ ॥

अपास्ताध्यात्मरूपाणां देवतानां समाश्रयः ॥
भूतपञ्चकमेवेदं साधारण्याद्भवेत्सदा ॥ २९९ ॥

देवताशब्देन करणग्रामग्रहे तस्य स्थूलदेहस्थत्वात्तन्नाशे निराश्रयस्यानवस्थानान्मुक्तिरित्याशङ्क्याऽऽह । अपास्तेति । स्थूलदेहनाशे निरस्तदेहाश्रयाणां वागादीनामपञ्चीकृतं भूतपञ्चकमेवाऽऽधारं स्याचस्य सर्वकार्यसाधारणत्वेन सर्वदा सर्वाश्रयत्वादित्यर्थः ॥ २९९ ॥

---

१ ख. एव च । २ ख. अन्यस्या ।

यजमानस्य कर्मास्ति ज्ञानं तूद्गातृसंश्रयम् ॥
समुच्चयोऽतस्तस्यापि भिन्नाधिष्ठानतो न च ॥ ३८३ ॥

समुच्चयादुद्गातुर्देवात्तिरिति पक्षं निरस्य यजमानस्य ततस्तद्भावपक्षं निरस्यति। यजमानस्येति। यजमानस्यापि ज्ञानकर्मणोः समुच्चयो देवभावप्राप्तिहेतुरनुष्ठेयो नास्तीत्यत्र शब्दपरामृष्टं पूर्वोपदिष्टं हेतुमेव स्पष्टयति। भिन्नेति ॥ ३८३ ॥

मतं तथा याजमानं स्याज्ज्ञानं यत्प्रागुदीरितम् ॥
स्वयमेव कृतार्थत्वात्काऽपेक्षाऽस्यर्त्विजं प्रति ॥ ३८४ ॥

उभयोः समुच्चयादेवभावे पूर्ववादिना निरस्ते सिद्धान्ती यजमानस्य ततस्तद्भावं साधयति। मतमिति। यत्पूर्वं प्राणोपासनमुक्तं तथा याजमानमिष्टमुद्गातुर्यजमानेन क्रीतत्वात्कर्म च यजमानस्योभयसंमतमत समुच्चयाद्देवत्वं तस्य युक्तमित्यर्थः। असमुच्चयवादी शङ्कते। स्वयमिति। कर्मवज्ज्ञानमपि याजमानं चेत्तर्हि तस्योभयत्र स्वयमेव शक्तेरुद्गातारं प्रति नापेक्षा स्याद्दृश्यते च तदपेक्षा तस्मादौद्गात्रमेवोपासनमिति न समुच्चयाद्देवत्वं यजमानस्येत्यर्थः ॥ ३८४ ॥

कर्मण्युद्गात्रपेक्षावज्ज्ञानेऽपीति मतं यदि ॥
उद्गातुरपि तत्तुल्यं नोद्गातर्ते क्रिया यतः ॥ ३८५ ॥

सिद्धान्ती समुच्चयं साधयति। कर्मणीति। यदि कर्मणि याजमाने निष्पत्त्यर्थमुद्गात्रपेक्षेति मतं तर्हि तद्वदेव ज्ञानेऽपि याजमाने जन्मार्थमितरापेक्षा तथा च समुच्चयाद्यजमानस्य देवत्वमित्यर्थः। संप्रत्युद्गातुरपि समुच्चयाद्देवत्वं साधयति। उद्गातुरिति। यथोद्गातारं विना ज्योतिष्टोमादिक्रिया न सिध्यति तथा तां विना मोद्गाताऽपि सिध्येत्क्रियारूढस्य तद्भावतो यजमानवदुद्गातुरपि कर्म कल्प्यं ज्ञानं तु तुल्यं क्रीतत्वेऽप्युद्गातुस्तदाश्रयत्वात्तस्मात्तस्यापि समुच्चयाद्देवत्वं युक्तमित्यर्थः ॥ ३८५ ॥

याजमानं यथा कर्म ह्याश्रित्य फलवद्भवेत् ॥
अन्नाद्यागानमुद्गातुस्तज्ज्ञानं तद्वदाश्रितम् ॥ ३८६ ॥

यत्तु भिन्नाधिष्ठानत्वान्न समुच्चयो ज्ञानकर्मणोरिति तत्राऽऽह। याजमानमिति। यथा यजमानस्वामिकं कर्माऽऽश्रित्य तेन समुचितं सदुद्गातुरन्नाद्यागानं फलं साधयति तथा तदीयज्ञानमाश्रित्य तेन समुचितमितरत्कर्म फलं साधयति यजमानकर्माश्रितं तेन समुचितमितरज्ज्ञानमपि स्वफलं साधयेदतो भिन्नाधिकरणयोरपि ज्ञानकर्मणोः समुच्चयादुभयोर्देवभाव संभवतीत्यर्थः। उद्गातृयजमानसंबन्धवत्तदीयज्ञानकर्मणोरपि संबन्धोपपत्त्यर्थो हिशब्दः ॥ ३८६ ॥

समुच्चयाच्चेदुभयोरुद्गातृयजमानयोः ॥
देवभावः किमर्थेयं तद्धैतदिति हि श्रुतिः ॥ ३८७ ॥

द्वयोः समुच्चयादेवाप्तिं सिद्धान्तिना समर्थितां पूर्ववाद्यनुवदति । समुच्चयादिति । केवलज्ञानादेवाप्तिरुद्गातृयजमानयोर्वाऽन्यस्य वा नाऽऽद्यस्तयोः समुच्चयाधिकारित्वाभ्येतरस्तस्याप्रस्तुतत्वादिति मत्वाऽऽह । किमर्थेति ॥ ३८७ ॥

सर्वाश्रमाणां तर्हीदं सामान्येनाभिधीयते ॥
तद्धेतदिति सिद्धत्वादुद्गातृयजमानयोः ॥ ३८८ ॥

कर्मशून्यानां सर्वेषां त्रैवर्णिकानां केवलज्ञानादेवाप्तिरित्युत्तरमाह । सर्वेति । प्रकृतवाक्यप्रामाण्यात्केवलज्ञानात्फलमिदं चेत्तर्हि तेन सर्वाधिकृतानां कर्मिणामविशेषेणेदं ज्ञानं फलवदुच्यत इत्यर्थः । प्रकृतयोरेव द्वयोरिदं ज्ञानं किं न स्यादित्याशङ्क्याऽऽह । सिद्धत्वादिति । तयोः समुच्चयाधिकारित्वस्य स्थितत्वान्न केवलज्ञानेऽधिकारितेत्यर्थः ॥ ३८८ ॥

देवभावेन विज्ञानं संस्करोत्येव तद्ध्रियम् ॥
परार्थमपि सत्कस्मादनपेक्षं न सिद्धये ॥ ३८९ ॥

इति श्रीबृहदारण्यकोपनिषद्भाष्यवार्तिके तृतीयं ब्राह्मणम् ॥ ३ ॥

केवलज्ञानस्य देवत्वाप्तिहेतुत्वमयुक्तं समुच्चितस्यैव तद्धेतेरित्याशङ्क्य कैमुतिकं न्यायमाह । देवेति । उद्गीथज्ञानमुद्गातृकर्तृकं यजमानस्वामिकमपि कर्तारं देवभावेन योजयति किमुतानपेक्षं कर्तृस्वामिकमेव सदुपासनं कर्तुर्देवभावमापादयतीत्यतो ज्ञानं केवलमपि कस्मान्न तद्भावलाभाय भवेदित्युपपन्नं केवलस्यापि ज्ञानस्य देवाप्तिफलत्वमित्यर्थः ॥ ३८९ ॥

इति बृहदारण्यकोपनिषद्भाष्यवार्तिकटीकायां तृतीयमुद्गीथब्राह्मणम् ॥ ३ ॥

---

अथ चतुर्थं ब्राह्मणम् ।

ज्ञानकर्मफलं चैतत्कर्मकाण्डप्रचोदितम् ॥
आत्मैवेत्यादिशास्त्रेण सृष्ट्यादौ कर्तृतोच्यते ॥ १ ॥

पूर्वोत्तरयोर्ब्राह्मणयोः संबन्धं वक्तुं वृत्तमनुवदति । ज्ञानेति । ज्ञानस्य समुच्चितस्य[1] केवलस्य च फलमेतत्सूत्रात्मरूपं ज्ञानकर्मविषये पूर्वस्मिन्ब्राह्मणे प्रकाशितमित्यर्थः । इदानीमात्मैवेदमित्यादेरापाततस्तात्पर्यमाह । आत्मेति । समुच्चयादिफलभूतस्य प्रजापतेर्जगत्सृष्ट्यादौ स्वातन्त्र्यमात्मैवेत्यादिना तद्धेदमित्यतःप्राक्तनग्रन्थेनोच्यत इत्यर्थः ॥ १ ॥

जगदुत्पत्तिसंहारस्थित्यादौ जगदात्मनः ॥
क्रियाधीफलभूतस्य स्वातन्त्र्यमुपवर्ण्यते ॥ २ ॥

---

[1] ख. 'तिकन्या' । -

स्वातन्त्र्योपवर्णनफलं वक्तुमुत्तरार्धमवतारयति । जगदिति । आदिपदेन नियमनादिग्रहः । उपवर्ण्यते प्रकृतेन शास्त्रेणेति शेषः ॥ २ ॥

स्तुत्याऽनया च वेदोक्तक्रियाज्ञानस्तुतिर्भवेत् ॥
कृता विवक्षितं त्वत्र सर्वमप्येतदीरितम् ॥ ३ ॥
वैदिकं साधनं ज्ञेयं ज्ञानकर्मात्मकं पुरा ॥
महानर्थफलायैव न मोक्षायेति निश्चितिः ॥ ४ ॥

प्रजापते स्वातन्त्र्योक्तिफलमाह । स्तुत्येति । फलातिशयो हेत्वतिशयापेक्षोऽन्यथाऽऽकस्मिकत्वापातादतो ज्ञानकर्मफलभूतसूत्रविभूतिरुच्यमाना हेत्वोस्तयोर्महत्त्वं द्योतयतीत्यर्थः । आपातिकं तात्पर्यमुक्त्वा परमतात्पर्यमाह । विवक्षितं त्विति । यत्पूर्वसंदर्भे कर्मकाण्डे वा ज्ञानं कर्म चेति साधनं वेदप्रमाणकमुक्तं तत्सर्वमपि गर्भवासादिसंसारार्थमेव न मोक्षार्थमिति निश्चितिरिति यत्तदत्राऽऽत्मैवेत्यादौ विवक्षितं ज्ञेयमिति योजना । संसारादधिकानर्थाभावविवक्षया महत्त्वविशेषणम् ॥ ३ ॥ ४ ॥

वैदिकं साधनं सर्वमविद्योत्थत्वकारणात् ॥
तीव्रानर्थफलायेति ब्रह्मविद्याधिकारतः ॥
विवक्षितोऽर्थो यत्नेन तद्वैराग्यविवित्सया ॥ ५ ॥

ननु ज्ञानकर्मणोर्न संसारफलत्वं नहि वैदिकं ध्यानं कर्म वाऽनर्थफलं ब्रह्मज्ञानेऽपि तत्प्रसङ्गादित्याशङ्क्याऽऽह । वैदिकमिति । वेदोक्तमपि सर्वं ज्ञानकर्मात्मकं साधनं कर्ताऽहमित्यादिमिथ्याज्ञानजत्वात्तत्फलभोगस्य च देहाद्यपेक्षत्वादनर्थार्थमिति तात्पर्यमात्रेणोऽर्थस्तस्य ब्रह्मविद्याप्रकरणत्वात्प्राधान्येनोपास्त्यादेरत्राविवक्षितत्वाद्ब्रह्मविद्यायास्त्वविद्योत्थत्वेऽपि परमपुरुषार्थहेतुत्वं श्रुत्यादिसिद्धमितरस्य तदाभासहेतुतेत्यर्थः । संसारस्य सर्वानर्थापेक्षया दुश्चिकित्सत्वविवक्षया तीव्रत्वविशेषणम् । वैदिकोपास्त्यादेरनर्थफलत्वोक्तिः परमपुरुषार्थहेतुब्रह्मविद्याप्रकरणे विफलेत्याशङ्क्याऽऽह । तद्वैराग्येति । तस्माज्जुगुप्सेतेतिश्रुतेरनर्थरूपात्कर्मादिफलात्तत्साधनाद्विद्याधिकृतस्य वैराग्यविधानेच्छया विद्याप्रकरणे तदनर्थफलत्वोक्तिरित्यर्थः ॥ ५ ॥

यतोऽविरक्तः संसाराज्ञाऽऽत्मज्ञानाय कल्पते ॥
तदेतदात्मतत्त्वं हि पदनीयमितीरणात् ॥ ६ ॥

विद्याप्रकरणे विद्यैव निगद्यतां किं वैराग्योक्त्येत्याशङ्क्याऽऽह । यत इति । अविरक्त इति च्छेदः । अतो वैराग्यमधिकारिविशेषणं वाच्यमिति शेषः । कर्मज्ञानफलाद्वैराग्ये ब्रह्मज्ञानफलादपि स्यादविशेषादित्याशङ्क्याऽऽह । तदेतदिति । आत्मनोऽन्य-

१ क. °त्मार्थ° ।

त्रापुरुषार्थे पदनीयत्वयोग्यत्वाभावो हिशब्दार्थः । आगमविरोधादनुमानानुदयात्र ब्रह्मधीफले वैराग्यमित्यर्थः ॥ ६ ॥

पुत्रादिभ्यस्तथा भेयानिति वक्ष्यति सादरम् ॥ ७ ॥
वेदोक्तं निखिलं पुंसः सत्त्वशुद्धिफलं स्मृतम् ॥
कर्म ध्यानादिकं यत्नाच्छ्रेयोर्थिभिरनुष्ठितम् ॥ ८ ॥

आत्मतत्त्वस्यापुरुषार्थस्य कथं पदनीयत्वमत आह । पुत्रादिभ्य इति । तथेत्यात्मतत्त्वस्य पदनीयत्वानुसारेणेति यावत् । तथाच तस्य परमानन्दतया परमपुरुषार्थत्वात्कुतो ब्रह्मधीफले वैराग्यमित्यर्थः । ज्ञानकर्मणोरपि ब्रह्मधीवत्रानर्थफलत्वमन्यथा कर्मकाण्डस्यानर्थनिष्ठत्वेनाप्रामाण्यापातादित्याशङ्क्य प्रनाड्या तस्य मोक्षार्थत्वान्मैवमित्याह । वेदेति । आदिशब्देन तद्वासना गृह्यते । यत्नः शास्त्रानुसारित्वम् । श्रेयोर्थिभिर्विना फलविशेषाभिलाषं श्रेयोमात्रमिच्छद्भिरिति यावत् । अनुष्ठितमीश्वरार्पणबुद्ध्येति शेषः । स्मृतं श्रुतं मेत्यर्थः । येन केनचन यजेतेत्यादिभिः श्रूयते । यस्यैते चत्वारिंशत्संस्कारा इत्यादि च स्मर्यते । सत्त्वमन्तःकरणं तस्य शुद्धिस्तदीयरागादिविगमः ॥ ७ ॥ ८ ॥

सम्यक्संशुद्धधिषणः संसारं वेत्ति तत्त्वतः ॥
दृष्टसंसारतत्त्वश्च वैराग्यं संसृतेर्व्रजेत् ॥ ९ ॥

किमर्था मुमुक्षोर्बुद्धिशुद्धिस्तत्राऽऽह । सम्यगिति । पुनः समिति विशेषणं शुद्धेरतिदृढत्वसिद्ध्यर्थम् । शुद्धिर्विवेकहेतुस्तस्य च वैराग्यं फलमित्याह । दृष्टेति ॥ ९ ॥

आविरिश्चाद्विरक्तो हि संसारान्निविवृत्सति ॥
न चोक्तज्ञानकर्मभ्यः सा निवृत्तिः प्रसिध्यति ॥ १० ॥

तत्फलं शमादिद्वारा मुमुक्षुतेत्याह । आविरिश्चादिति । आ चार्वाचेरिति शेषः । कर्मादिनैव संसारध्वस्तेर्विद्याविषयर्त्यात्सर्वमेतद्फलमित्याशङ्क्याऽऽह । न चेति । "नान्यः पन्थाः" "नास्त्यकृतः कृतेन" इत्यादिश्रुतेरित्यर्थः ॥ १० ॥

वाङ्मनःकायकर्मभ्यस्ततसाध्यकटुकत्वतः ॥
व्युत्थायानर्थनिःसारसाधनान्यनुमार्गति ॥ ११ ॥

किं तर्हि मुक्तिसाधनमित्याशङ्क्य संन्यासपूर्वकश्रवणादिजन्यं सम्यग्ज्ञानमित्याह । वागिति । त्रिविधकर्मफलस्यानित्यत्वादिदोषवत्त्वेनासारत्वात्तेभ्यो व्युत्थायानर्थे संसारे निःसारे ध्वस्तिहेतुसम्यग्ज्ञानार्थं कर्माणि संन्यस्योक्तोऽधिकारी श्रवणादीनि पुनः पुनरावर्तयत्यतः सम्यग्ज्ञानान्मुक्तिरित्यर्थः ॥ ११ ॥

---

१ ख. 'सारे सा' ।

नित्यान्यपि च कर्माणि तत्संस्कारफलाश्रयात् ॥
परित्यजति सर्वाणि कृत्स्नसंसारदोषदृक् ॥ १२ ॥

काम्यनिषिद्धवर्जनेऽपि कुतो मुमुक्षोर्नित्यादित्यागो हेत्वभावादित्याशङ्क्याऽऽह । नित्यान्यपीति । नित्याद्यनुष्ठानकृतसंस्काररूपफलावष्टम्भात्संसारदोषदर्शिनो नित्यादित्यागसिद्धिरित्यर्थः ॥ १२ ॥

संसारवह्निजं दुःखं संभावयति ना परम् ॥
भूयो दुःखं किमन्यस्माभ्रित्यानुष्ठानहानितः ॥ १३ ॥

अकुर्वन्विहितं कर्मेत्यादिस्मृतेर्नित्यादित्यागे प्रत्यवायात्तत्त्यागायोग इत्याशङ्क्याऽऽह । संसारेति । शुद्धधीर्विरक्तोऽधिकारी नेत्युच्यते । स च नित्यादिकृतदेहादिग्रहप्रयुक्तं दुःखमात्यन्तिकं कुम्भीपाकसमं मन्यते । तथाच नित्याद्यकरणात्पुनरुक्ताद्दुःखादन्यदधिकं दुःखं न किंचिद्भवत्यतस्तत्करणाकरणयोर्दुःखस्य तुल्यत्वादखिलदुःखोत्खातिसम्यग्धीसिद्धये श्रवणादि चिकीर्षुरुक्तोऽधिकारी काम्यादिवन्नित्याद्यपि त्यजति । स्मृतिरविरक्तामुमुक्षुविषयेत्यर्थः ॥ १३ ॥

मुक्तेर्बिभ्यत इत्यादि तथाचं श्रुतिशासनम् ॥
तन्मूला चं स्मृतिः साक्षाद्वेदोनित्यादिका स्फुटा ॥ १४ ॥

विरक्तस्य कर्मत्यागे श्रुतिस्मृती प्रमाणयति । मुक्तेरिति । प्रामाण्यार्थं तन्मूलेत्युक्तम् । प्रत्यक्षवदबाध्यार्थबोधित्वेन प्रामाण्यमाह । साक्षादिति । असंदिग्धबोधित्वेनापि तदाह । स्फुटेति ॥ १४ ॥

अविज्ञातं परं तत्त्वं जनिमत्कारणं श्रुतौ ॥
आन्त्यात्कार्याचदेव स्यात्सर्वकार्यविशेषणम् ॥ १५ ॥

वैदिकस्य कर्मादेः संसारफलत्वात्ततो विरक्तोऽधिकारी वक्ष्यमाणविद्यायामित्यश्वमेधाधिकारे दर्शितमेवावान्तरव्याख्यानान्तरभाविसर्गोपदेशद्वारा दर्शयितुमव्याकृतवाक्यात्प्राक्तनं वाक्यमित्यात्मैवेत्यादेर्विवक्षितमर्थमुक्त्वाऽवान्तरव्याख्यानान्तरं प्रजापतेः सकाशाद्व्यमानाऽपि सृष्टिर्ब्रह्मकर्तृकैवेति वस्तुमज्ञातं ब्रह्मैव सर्वजगत्कारणमित्याह । अविज्ञातमिति । श्रुतौ यज्जनिमतो जगतः कारणं श्रुतं तदज्ञानशबलं परमेव तत्त्वमिति योजना । यद्यपि परिशुद्धं ब्रह्म जगतो मूलकारणं तथाऽपि तत्राज्ञानं द्वारी भवति । अन्यथा कूटस्थासङ्गाद्वयस्य तद्योगादिति भावः । परस्य मूलकारणत्वेऽपि सूत्रादवान्तरकारणमित्याशङ्क्याऽऽह । आन्त्यादिति । अन्त्यं कार्यं पृथिवी तत्पर्यन्तं सर्वस्य कार्यस्य व्यावर्तकं कारणं सूत्राद्यात्मना परमेव ब्रह्मेत्यर्थः ॥ १५ ॥

---

१ क. च स्मृति । २ ग. च श्रुति. । ३ क. 'दान्विताः' ।

तेन तेनाऽऽत्मकार्येण स्वात्माभासतमोवधिः ॥
विशिष्टः ससृजे विष्णुस्तेजोवन्नादि मायया ॥ १६ ॥

कथं निर्विकारस्य परस्य कारणतेत्याशङ्क्याविज्ञातमिति सूचितं विशदयति । तेनेति । स्वात्मनश्चिद्धातोराभासो यत्र तेन तमसाऽवधिशब्दितोपाधिनोपहितः परः सूत्राद्यात्मना स्वकार्येण विशिष्टो भूतभौतिकं जगदुत्पादितवानित्यर्थः । ब्रह्मा स्रष्टा पालयिता विष्णुरीशः संहर्तेत्यर्थभेदं परिहर्तुं विष्णुरित्युक्तम् । उपाधिभूततमसो जगज्जनिप्रयोजकत्वं सूचयति । माययेति ॥ १६ ॥

अविद्ययाऽस्य स्रष्टृत्वं कूटस्थस्यापि सर्वदा ॥
यथावस्तुधियः सूतेः मायेत्युक्तम् नित्यं तेन तन्मतम् ॥ १७ ॥

निर्विकारस्यापि परस्य मायाधीनकारणत्वमुक्तमय कारणत्वान्मृदादिवन्निर्विकारत्वासिद्धिरित्याशङ्क्य हेतोरन्यथासिद्धेरागमबाधाच्च नैवमित्याह । अविद्ययेति । कौटस्थ्यवत्कारणत्वस्यापि सदा सत्त्वात्किमविद्ययेत्याशङ्क्याऽऽह । यथेति । अन्वयव्यतिरेकाभ्यां मायां तु प्रकृतिमित्यागमाच्चाविद्याधीना स्रष्टृतेत्यर्थः । जगत्कारणं नित्यं चेन्नाविद्याधीनमनित्यं चेदनवस्था प्रसिद्धिविरोधश्चेत्याशङ्क्याऽऽह । नित्यमिति । अनादित्वेन कारणं नित्यमिष्टं न त्वनन्तत्वेनान्यथा विद्यावैफल्यादित्यर्थः ॥ १७ ॥

ज्ञानकर्मादितत्त्वं सत्सूत्रं जज्ञे ततो विभोः ॥
ज्ञानक्रियाशक्तिमयमत्रेदं जगदाहितम् ॥ १८ ॥

अज्ञातं ब्रह्म कारणमित्यत्र क्रमं दर्शयति । ज्ञानेति । आदिपदं वासनार्थम् । ततो विभोरित्यव्याकृताद्ब्रह्मणः सकाशादिति यावत् । किं तत्सूत्रं तदाह । ज्ञानक्रियेति । अपञ्चीकृतपञ्चमहाभूततत्कार्यात्मकं लिङ्गं सूत्रं तच्च क्रियाशक्तिमत्प्राणाख्यं ज्ञानशक्तिमच्च हिरण्यगर्भाख्यमित्यर्थः । तत्र सूत्रे कार्यलिङ्गकमनुमानमाह । यत्रेति । न हीदमनाधारं सिध्यति न च सूत्रादन्यदस्याऽऽधारो वायुना वै गौतम सूत्रेणेत्यादिश्रुतेरतो दृश्यस्थूलकार्याश्रयं सूत्रमित्यर्थः ॥ १८ ॥

विराडपि ततो जातस्त्रैलोक्यात्मकदेहवान् ॥
यथोक्तज्ञानकर्मभ्यां मनोर्जन्म ततोऽपि च ॥ १९ ॥

अज्ञातात्परस्मात्सूत्रोपाधेर्विराडुत्पत्तिमाह । विराडपीति । कोऽसौ विराडित्यपेक्षायां पञ्चीकृतपञ्चमहाभूततत्कार्यात्मक इत्याह । त्रैलोक्येति । तदुत्पत्तौ निमित्तमाह । यथोक्तेति । विराजा स्थितात्परस्मान्मनोरुत्पत्तिमाह । मनोरिति । ततः परस्मान्मनूपाधेः सर्वेयं मानवी सृष्टिरित्याह । ततोऽपीति । सर्वसृष्टौ ज्ञानकर्मणोर्निमित्तत्वमविशिष्टमिति वक्तुं चशब्दः ॥ १९ ॥

या महाप्रलयात्सृष्टिः सा विरिञ्चस्य वक्ष्यते ॥
आन्तरप्रलयाद्या तु विराजोऽपीयमुच्यते ॥ २० ॥

कुत्र सूत्रसृष्टिर्मूलकारणादुच्यते तद्धेदमित्यादावित्याह। येति। महाप्रलयादनन्तरमिति शेषः। निरिश्चस्य शक्तिद्वयवतः सूत्रस्येत्यर्थः। यद्यपि सूत्राद्विराजः सृष्टिरश्वमेधब्राह्मणे व्याख्याता तथाऽपि विराजो मन्वादिसृष्टिः कुत्रोच्यते तत्राऽऽह। आन्तरेति। अवान्तरप्रलयादपि परस्ताद्या विराजो मन्वादिसृष्टिः सेयमिममेवाऽऽत्मानं द्वेधाऽपातयदित्यत्रोच्यत इत्यर्थः ॥ २० ॥

स वै शरीरी प्रथमः स वै पुरुष उच्यते ॥
आदिकर्ता स भूतानां ब्रह्माऽग्रे समवर्तत ॥ २१ ॥

मन्वादिस्रष्टरि विराजि पौराणिकसंमतिमाह। स वा इति। स्थूला व्यष्टयो भूतशब्देन गृह्यन्ते। अग्रे व्यष्टीभूतस्थूलपिण्डसर्गात्पूर्वमिति यावत् ॥ २१ ॥

प्रत्यग्भूतः परार्थेभ्यो योऽनन्यानुभवं प्रति ॥
प्रथते स इहाऽऽत्मेति जगत्यस्मिन्निगद्यते ॥ २२ ॥

भाष्यानुसारेणाऽऽत्मेत्यादिवाक्यतात्पर्यमुक्त्वोद्धाप्यमेव परात्मपरत्वेन वाक्यं व्याकुर्वन्नात्मशब्दार्थमाह। प्रत्यगिति। अस्मिञ्जगति परार्थेभ्यः कार्यकारणेभ्यः प्रत्यग्भूतः स्वभावानुभवमपेक्ष्यैव प्रतिभूतः सः प्रथते स कार्यकारणहीनः स्वप्रकाशोऽत्राऽऽत्मशब्देनोच्यते। आत्मा वा इदमेक एवाग्र आसीदितिवदात्मगृहीतिरितरवदुत्तरादिति न्यायादित्यर्थः ॥ २२ ॥

आत्माभासैकसंसिद्धेस्तदज्ञानसमुद्भवम् ॥
आत्मैव भण्यते मोहात्तदात्मान्यतिरेकतः ॥ २३ ॥

भूतात्मा चेन्द्रियात्मा चेत्यादौ भूतादावप्यात्मशब्दात्तदेवात्र किं न ग्राह्यमित्याशङ्क्याऽऽह। आत्माभासेति। आत्माज्ञानोद्भूतं भूतादि आब्रह्म स्वतः सिध्यत्तदभिदाभासेनैकेनैव तत्सिद्धेस्तादात्म्यव्यस्तमात्मेत्युच्यते कल्पितस्याधिष्ठानमन्तरेण सत्तास्फूर्त्योरभावात्तद्भूतायात्माभासत्वात्तत्राऽऽत्मशब्दो न हि संभवति मुख्ये गौणार्थो ग्राह्य इत्यर्थः। अथाऽऽत्मशब्दार्थस्य कार्यकारणविलक्षणे परिच्छेदः स्यात्तेत्याह। मोहादिति। कार्यादेरात्मनः सकाशान्मोहादेवातिरेकाद्वस्तुनस्तदात्मैवेति नास्ति परिच्छेद इत्यर्थः ॥ २३ ॥

एवेत्यवधृतावेतदात्मीयार्थनिषेधकृत् ॥
मन्वादि जन्मनः पूर्वमात्मैवेदमभूज्जगत् ॥ २४ ॥

एवशब्दार्थं वदन्नवधृतिस्वरूपमाह। एवेतीति। परिशिष्टपदत्रयार्थं वदन्वाक्यार्थमाह। मन्वादीति। इदं मन्वादि जगदिति संबन्धः। आदिशब्देनाऽऽकाशादिग्रहः ॥ २४ ॥

अध्यात्मादिविभागे स्यादात्मात्मीयादिभेदधीः ॥
तस्मिन्नसति सा न स्यादपेक्षाविरहाद्विभोः ॥ २५ ॥

प्रागवस्थायामज्ञातात्ममात्रत्वेऽपि ज्ञेयस्य जगतो न तज्ज्ञानाभावो ब्रह्मणः सर्वज्ञत्वादतोऽवधारणानुपपत्तिरित्याशङ्क्याऽऽह । अध्यात्मादीति । आदिपदमधिभूताधिदैवसंग्रहार्थं द्वितीयं च तदन्यान्यदीयमिति भेदधियं संग्रहीतुम् । सत्येवार्थे ज्ञानं निरालम्बनं ज्ञानायोगादतो ज्ञेयवज्ज्ञानमपि प्राङ्नास्त्येवेत्यर्थः । कथं तर्हि तदा ब्रह्म सर्वज्ञं न हि कांचिदवस्थामास्थाय तत्त्वोच्यते तत्राऽऽह । अपेक्षेति । असत्यर्थे तज्ज्ञानापेक्षाभावादीश्वरस्य विद्यमानसर्वार्थप्रतिबन्धज्ञानात्सर्वज्ञतेत्यर्थः ॥ २५ ॥

मिथोपास्तम्यपेक्षं हि नामरूपादिमज्जगत् ॥
प्रत्यङ्मात्रप्रमाणं स्यात्पराङ्चेति चित्रताम् ॥ २६ ॥

प्रागवस्थायां ज्ञानज्ञेययोरभावे जगदभावनिष्ठं स्यादिति शून्यवादमाशङ्क्याऽऽह । **मिथ इति ।** इदं ज्ञानमिदं ज्ञेयमित्यादिनाऽन्योन्यमपेक्षाशून्यं नामरूपकर्मात्मकं जगत्प्रत्यङ्मात्ररूपत्वेन प्रागुत्पत्तेस्तत्परिमाणं तन्निष्ठमेव स्यात्तत्राभावनिष्ठतेत्यर्थः । सदनुवेधेनाधिगतस्य जगतो नाभावनिष्ठतेति वक्तुं हीत्युक्तम् । प्रपञ्चस्याऽऽत्ममात्रत्वे तस्यैकरूप्यात्तस्यापि तथात्वमेकस्यानेकरूपत्वायोगादित्याशङ्क्य सर्गकाले प्रतीचो भेदेन पराक्त्वमासाद्य नानात्वमित्याह । पराङिति ॥ २६ ॥

अपामार्गलतेवायं विरुद्धफलदो भवः ॥
प्रत्यग्दर्शां विमोक्षाय संसाराय पराग्दृशाम् ॥ २७ ॥

आत्ममात्रत्वेन प्रपञ्चस्यैकरूप्ये तद्भेदेन नानात्वे च फलितमर्थं दृष्टान्तेनाऽऽह । अपामार्गेति । सा खल्वानुलोम्येनाऽऽलभ्यमाना मृदुस्पर्शतया दुःखाभावहेतुः प्रातिलोम्येन स्पृश्यमाना तु कर्कशत्वेन दुःखहेतुरेवमेव संसारो विरुद्धफलनिबन्धनमित्यर्थः । संसारस्य विरुद्धफलत्वमेव स्फुटयति । प्रत्यगिति । ये संसारं प्रत्यङ्मात्रतया पश्यन्तस्ततो भेदेन तदभावं मन्यन्ते तेषामनर्थव्यस्तये स स्यात्तद्धि प्रत्यङ्मात्रतया दृष्टः संसारस्तद्भेदमलभमानोऽनर्थमाधातुमलम् । ये तु प्रतीचः सकाशात्पराञ्चं स्वातन्त्र्येण लब्धसत्ताकं प्रपञ्चं पश्यन्ति तेषां सोऽनर्थाय भवति । द्वितीयाद्वै भयं भवतीति वक्ष्यमाणत्वादित्यर्थः ॥ २७ ॥

व्याकृताव्याकृतं विश्वं प्रत्यक्प्रत्ययमात्रकम् ॥
मोहात्त्वाहमितिज्ञानाद्द्वयारत्यादिमद्भवेत् ॥ २८ ॥

उक्तरीत्या बन्धमोक्षहेतौ तस्मिन्किं मानं साक्षिप्रत्यक्षमित्याह । व्याकृतेति । प्रतीचो भेदेन व्यक्तनामरूपं जगदनर्थहेतुतया दृष्टं तन्मात्रत्वेनोपलक्ष्यमव्यक्तनामरूपं

1 कं. ग. °दात्मीयात्मादि° । २ क. °द्वारतो° ।

सदेवानर्थनिर्वाहि ससाक्षिकमित्यर्थः । परात्त्वेन दृष्टस्य जगतोऽनर्थहेतुत्वं समर्थयते । मोहेति । तदुत्थे द्वैतेऽहमिति वा ममेति वा ज्ञानाच्चदेव ज्ञानद्वयगम्यं भयादिहेतुर्भवतीत्यर्थः ॥ २८ ॥

अहंममेतिविज्ञानं विद्यया ध्वंसितं यदा ॥
तदाऽद्वये दृशौ दृष्टे न भयादि तमोहतेः ॥ २९ ॥

प्रत्यग्याथात्म्यतया दृष्टस्य मोक्षहेतुत्वं साधयति । अहमिति । यदा सर्वस्य प्रत्यक्त्वविद्ययाऽपरोक्षयाऽऽगमादिकृतया द्विविधा मिथ्याधीरपनीता तदा दृगात्मन्यद्वये साक्षात्कृते मूलाज्ञानध्वस्तेर्भयारत्याद्यनवकाशमित्यर्थः ॥ २९ ॥

इदं धीनामगम्यं यच्चित्रं सत्प्रथते हिरुक् ॥
मन्वादि सृष्टेस्तत्पूर्वमात्मैवाभूदिदं जगत् ॥ ३० ॥

आत्मैवेत्यादिवाक्यव्याख्यानप्रसङ्गप्राप्तं परिसमाप्य प्रकृतवाक्यव्याख्यामुपसंहरति । इदमिति । हिरुगात्मन सकाशात्पृथगित्यर्थः । मन्वादिशब्दस्य पूर्ववदन्वयः ॥ ३० ॥

एतावद्वास्तवं वृत्तं मोहोत्थं भण्यतेऽधुना ॥
कोशपञ्चकर्ता यातः प्रत्यगज्ञानतो यतः ॥ ३१ ॥
स एष परमोऽप्यात्मा कामाविद्यापुपप्लवात् ॥
संवृत्तः पुरुषाकार इत्यनुक्रोशतीव नः ॥ ३२ ॥

उक्तवक्ष्यमाणयोर्विशेषार्थमुपक्रमनुवदति । एतावदिति । कथं तर्हि तस्यात्मनोऽद्वैकरसस्य पुरुषविधत्वं तत्राऽऽह । मोहेति । मोहवशात्परस्य पुरुषप्रकारत्वमुक्तं व्यक्तीकरोति । कोशेति । कार्यकारणनिर्मुक्तः स्वप्रकाशः परः प्रत्यगाश्रयविषयज्ञानादविद्यास्मितायुपप्लवाद्भयादिकोशपञ्चकर्तृत्वं यतो यातोऽतः स पुरुषाकारो जात इत्यस्मात्तुपुरुषन्द्दष्ट्वा पुरुषविधश्रुतिरस्येयमवस्था कथमित्यनुक्रोशमिव करोति तन्नास्य वास्तवी पुरुषविधतेत्यर्थः ॥ ३१ ॥ ३२ ॥

आनन्दाद्यन्नपर्यन्तान्कारणेतररूपिणः ॥
पुरुषादिप्रकारांस्तान्प्रत्यक्त्वानलक्षयत् ॥
पुरुषविध इत्युक्त्वा मूर्ध्ने चैवं प्रवक्ष्यते ॥ ३३ ॥

पुरुषविधशब्दात्तत्प्रकारमात्रे भाति कथं कोशपञ्चकग्रहणमित्याशङ्क्य लक्षणयेत्याह । आनन्दादीति । आनन्दमयः कारणरूप्यन्ये चत्वारः कार्यरूपिणः कारणरूपिणश्चेति भेदः । पुरुषादीत्यादिपदं स्त्रीनपुंसकार्थम् । आनन्दमयादीनां पृथक्पृथगात्मत्वात्पुरुषत्वमेव न तद्विधतेत्याशङ्क्याऽऽह । प्रत्यगिति । प्रत्यगेव तत्त्वमेषां तत्र कल्पितानां कोशानां तानिति यावत् । कोशपञ्चकलक्षकत्वे पुरुषविधोक्तेर्योग्यतां वक्तुं

१ क. ˚नाऽऽऽसीदि˚ ।

हिशब्दः । नन्वत्र कोशपञ्चकं न श्रूयते न च श्रुत्यन्तरस्थमिह लक्ष्यते प्रत्यासत्त्यभावात्तत्राऽऽह । ऊर्ध्वं चेति । श्रुत्यन्तरं दृष्टान्तयितुं चशब्दः । प्रवक्ष्यते कोशपञ्चकमिति शेषः ॥ ३३ ॥

वाङ्मनःप्राणकोशांस्त्रीन्विराडन्नमयः स्वयम् ॥
तद्वेदमिति चाऽऽनन्दो नैवेहेति तथोच्यते ॥ ३४ ॥

कथमुत्तरत्र कोशपञ्चकोक्तिर्न हि तैत्तिरीयकवदत्र तद्वाचकशब्दोऽस्ति तत्राऽऽह । वागिति । मनो वाचं प्राणमिति कोशत्रयमन्नाधिकारे वक्ष्यते । वाक्शब्देन विज्ञानमयो गृह्यते । त्रीन्प्रवक्ष्यतीति शेषः । पुरुषविधशब्देनान्नमयकोशोक्तिरित्याह । विराडिति । यद्वा यः स्वयं मन्वादिलक्षणत्वेन विराडात्मा स्थितः सोऽन्नमयः सोऽनुवीक्ष्येत्यादौ वक्ष्यत इत्याह । विराडिति । तद्वेदमित्युत्तरत्र नैवेह किंचनेति पूर्वत्र चाऽऽनन्दमयकोशोक्तिर्विवक्षितेत्याह । तद्वेति ॥ ३४ ॥

अग्निर्पूर्वेति च तथा मन्त्रेणापि प्रकाशितः ॥
सामानाधिकरण्यं च तद्वेदमिति युक्तिमत् ॥ ३५ ॥

अन्नमयं विराजमधिकृत्य सृष्टिरनन्तरं वाच्येति विशेषतस्तत्र मन्त्रसंवादं दर्शयति । अग्निरिति । विराडात्मविषयवाक्यान्तरं समुच्चेतुं चशब्दः । यथोक्तवैराजरूपानुरोधस्तथाशब्दार्थः । पुरुषविधशब्दादिनेवेत्यपेरर्थः । प्रकाशितो विराडिति शेषः । परस्यैव स्वाज्ञानात्कारणेतररूपकोशपञ्चकव्याप्त्या पुरुषविधत्वमित्यत्र वाक्यशेषानुगुण्यमाह । सामानाधिकरण्यं चेति । अज्ञातपरवाचकतच्छब्दस्य कोशपञ्चकात्मकजगद्वाचकेदंशब्दस्य सामानाधिकरण्यं परस्यैव कोशपञ्चकत्वं सूचयति । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे प्रवृत्तिः सामानाधिकरण्यमिति स्थितेरित्यर्थः ॥ ३५ ॥

पृथिव्याद्यक्षरान्तश्च प्रश्नो वाचक्नवस्तथा ॥ ३६ ॥
प्रत्यग्दृष्ट्यनुविद्धाहंमत्यैकप्रमाणकः ॥
सोऽनुवीक्ष्याऽऽत्ममोहोत्थदृष्ट्याऽविद्योत्थरूपकम् ॥ ३७ ॥

परस्यैव कोशपञ्चकत्वे पाश्चमिकं सर्वस्य जगतोऽक्षरे पर्यवसानविषयं प्रश्नमनुकूलयति । पृथिव्यादीति । वाचक्नवी गार्गी तया कृतो वाचक्नवः । तथा परस्य कोशपञ्चकत्वानुरोधेनेति यावत् । नहि परस्याक्षरस्य कोशपञ्चकात्मकजगद्रूपत्वाभावे तस्य तस्मिन्नवसानं युक्तमिति भावः । आत्मैवेत्यादि पुरुषविध इत्यन्तं स्वमतेन व्याख्याय भाष्योक्तं विराजमेवाऽऽत्मशब्देन गृहीत्वा पूर्वं देहान्तरोत्पत्तेः सर्वं तद्वेदजातं तन्मात्रमासीत्स च पुरुषप्रकारः शिरःपाण्यादिमानित्येवं वाक्यार्थमादायोत्तरमादत्ते । प्रत्यगिति । आत्मचैतन्यव्याप्ताहंधीमात्रगम्यो विराडात्मा प्रत्यगविद्याकृतं प्रपञ्चं मोहोत्थया दृष्ट्याऽनुवीक्ष्य नाऽऽत्मनोऽन्यदपश्यदित्यर्थः ॥ ३६ ॥ ३७ ॥

यदभ्यस्तं पुराऽस्याभूदहमेवेदमित्यदः ॥
दर्शनं तदपेक्ष्यायमनुशब्दः प्रयुज्यते ॥ ३८ ॥

अथायमनुशब्दः सामीप्यं पाश्चात्यं वा ब्रूते नोभयथाऽपि युक्तः संनिहितप्रकृतान्वयायोगादित्येतत्राऽऽह । यदिति । त्रैलोक्यात्मकमिदं वैराजं रूपमहमिति यद्दर्शनमस्य यजमानदशायामभ्यस्तं तदपेक्षोऽनुशब्दः प्रयुक्तोऽतो न तद्वैयर्थ्यं पाश्चात्यवाचित्वादित्यर्थः ॥ ३८ ॥

अहमेवेदमस्मीति दर्शनं यत्सुभावितम् ॥
तत्फलं यत्तदन्वीक्ष्य नाऽऽत्मनोऽन्यद्ददर्श सः ॥ ३९ ॥

ननु यथोक्तं दर्शनं यजमानावस्थमास्थाय नानुशब्दो युक्त ईक्षणशब्देनापि तस्यैवोक्तेर्नहि तदपेक्षं तस्यैव पाश्चात्यं तत्राऽऽह । अहमेवेति । तस्य दर्शनस्य यत्फलं तदन्वीक्ष्येत्यत्रेक्षणमित्यर्थः । नान्यदित्यादत्ते । नेति ॥ ३९ ॥

तस्माद्दर्थान्तरासूतेरेकपिण्डात्ममात्रतः ॥
नापश्यदपरं किंचित्सोऽहमित्यभ्यधादथ ॥ ४० ॥

तद्व्याचष्टे । तस्मादिति । विराड्देहाद्देहान्तरस्यानुत्पत्तेरात्मीयं पिण्डमात्रं स दृष्टवांस्ततोऽन्यत्स्वतन्त्रं परतन्त्रं वा न किंचिदित्यर्थः । अपरमपश्यन्विराडात्मा किं कृतवानित्यपेक्षायामाह । सोऽहमिति । स्वव्यतिरिक्तादर्शनानन्तर्यमथशब्दार्थः ॥ ४० ॥

त्रैलोक्यात्मकदेहात्मा नापश्यदपरं पृथक् ॥
भिन्नार्थानभिसंबन्धात्प्रतीच्येवास्य धीरभूत् ॥ ४१ ॥

तद्व्याख्यातुं पूर्ववाक्यार्थमनुवदति । त्रैलोक्येति । अपरं स्वतन्त्रं परतन्त्रं वेत्यर्थः । तत्र हेतुमाह । भिन्नेति । स्वदेहातिरिक्तेनासंनिकर्षात्तस्मिन्विराजो न धीश्चेत्कुत्र तर्हि तस्य धीरिति तत्राऽऽह । प्रतीचीति ॥ ४१ ॥

सशब्दं दर्शनं यादृगभ्यस्तं तथैव सः ॥
व्याजहार फलावस्थो ह्यहमित्यात्मवाचकम् ॥ ४२ ॥

*कथं प्रतीचि स्वदेहे तस्य धीरासीदित्याशङ्क्य सोऽहमित्यादि व्याचष्टे । सशब्दमिति* । प्राग्यजमानावस्थायामिति यावत् । यजमानावस्थस्य फलावस्थस्य च प्रजापतेरेकत्वं हेतुं कर्तुं हिशब्दः ॥ ४२ ॥

उपासनार्थं नामास्य तस्योपनिषदित्यतः ॥
अतोऽहमित्यनेनैव ह्यात्मनाऽऽत्मानमभ्यधात्[1] ॥ ४३ ॥

प्रजापतेरहमिति नाम किमर्थं कथ्यते साधारणं हीदं सर्वेषामिति तत्राऽऽह । उपासनार्थमिति । तत्र श्रुतिं प्रमाणयति । तस्येति । तस्याऽऽध्यात्मिकस्य चाक्षु-

---

१ ख 'ह्यात्म ना' ।

यस्य पुरुषस्याहमिति रहस्यं नामेत्यतो वाक्यादहंनामत्वं प्रजापतेर्ध्यानार्थमिष्टमित्यर्थः। नामान्तरेषु सत्सु किमित्येतेनैवाऽऽत्मानमुक्तवानित्याशङ्क्याऽऽह । अत इति । उक्तादुपास्त्यर्थत्वादिति यावत् । आत्मनेत्यात्मवाचिनाऽहंशब्देनेत्यर्थः । तस्याऽऽत्मवाचित्वप्रसिद्ध्यर्थो हिशब्दः ॥ ४३ ॥

अहमित्यभ्यधादग्रे यस्मादात्मानमात्मना ॥
अहंनामाभवत्तस्माद्विराडेष प्रजापतिः ॥ ४४ ॥

ततोऽहंनामाभवदित्यस्यार्थमाह । अहमिति । अहमित्यात्मनेति संबन्धः ॥ ४४ ॥

तत्कार्यगेण लिङ्गेन ज्ञापयन्कारणाभिधाम् ॥
तस्मादपीति वक्त्येतां प्रसिद्धिं लोकसाक्षिकीम् ॥ ४५ ॥

प्रजापतिरहमित्यग्रे व्याजहार ततोऽहंनामाभूदित्यत्र किं मानमित्याशङ्क्य तस्मादित्यादिवाक्यतात्पर्यमाह । तदिति । प्रजापतिकार्यभूतप्रजावर्गगतेनाहमिति व्याहरणेन प्रथमप्रवृत्तेन लिङ्गेन कारणेऽपि तस्मिन्नहमित्यभिधानं तस्मादित्यादिना ज्ञापयन्वेदस्यास्याहंनामत्वे लोकप्रसिद्धिं च प्रमाणयतीत्यर्थः ॥ ४५ ॥

यथोक्तमहिमः कस्मात्संवृत्तः पुरुषो विराट् ॥
इतिहेतूपदेशाय स यदित्यादि भण्यते ॥ ४६ ॥

विराजः सर्वात्मत्वस्य दर्शितत्वात्पुरुषत्वानियमात्स वै पुरुष इतिस्मृतिविरोध इति शङ्कते । यथेति । नकारलोपं वैकल्पिकं मन्यते । विराजः पुरुषत्वे हेतूक्त्यर्थमुत्तरवाक्यमित्याह । इतिहेत्विति ॥ ४६ ॥

मिथो जिगीषतां पुंसां ज्ञानकर्मादिसाधनैः ॥
पुरा देवात्मतां योऽगात्पूर्वास्तेनेतरे जिताः ॥ ४७ ॥

तस्यार्थं संक्षिपति । मिथ इति । अहमहमिकया प्राथम्येन प्रजापतित्वप्रेप्सूनां मध्ये प्रथमत एव ज्ञानादिहेत्वतिशयाद्यस्तद्भावं गतवांस्तेनेतरे दग्धवर्जिता भवन्ति तस्मात्पूर्वमौषदिति पुरुषो विराडित्यर्थः ॥ ४७ ॥

वैराजपदसंप्रेप्सोर्यजमानमहाजनात् ॥
एनांस्यौषयतोऽग्रेऽतः संवृत्तः पुरुषाभिधः ॥ ४८ ॥

तस्मात्पुरुष इत्यस्यार्थमाह । वैराजेति ॥ ४८ ॥

औपस्त्यान्याप्मनः पूर्वं ज्ञानाद्यतिशयाग्निना ॥
वैराजपदलिप्सुभ्यस्तेनासौ पुरुषाभिधः ॥ ४९ ॥

एनसां प्रजापतित्वप्रतिबन्धकानां दाहे हेतुमनुवदन्विराजो यौगिकं पुरुषत्वमित्युक्तं निगमयति । औषदिति ॥ ४९ ॥

यथोक्तोपासनफलं वक्ष्यामीत्युत्तरं वचः ॥
ओषतीत्यादिकं ज्ञेयं वेदोपासीत यः सदा ॥ ५० ॥

किमिति नामान्तरेषु सत्सु पुरुषनामनिरुक्तिरित्याशङ्क्य तत्प्रशस्त्योपास्त्यर्थमिति मत्वाऽऽह। यथोक्तेति। पुरुषगुणकविराडुपासको मन्दोपासकान्फललिप्सूनिर्नित्याऽऽदावेव ध्यानातिशयात्प्रजापतिर्भवतीति वाक्यार्थं विवक्षन्नाह। वेदेति॥ ५०॥

योऽसावतीन्द्रियोऽग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः ॥
सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ ॥ ५१ ॥

येन प्राजापत्यात्मना विद्वानवतिष्ठते तत्र मानवीं स्मृतिं प्रमाणयति। योऽसाविति। ज्ञानेन्द्रियाविषयत्वमतीन्द्रियत्वम्। कर्मेन्द्रियाविषयत्वमग्राह्यत्वम्। उभयत्र हेतुः सूक्ष्म इति। परमाणुतुल्यत्वं पराकर्तुं व्याकरोति। अव्यक्त इति। तस्यासत्त्वमित्याशङ्क्याऽऽह। सनातन इति। तदेव सर्वात्मत्वेन साधयति। सर्वेति। अन्तःकरणाविषयत्वमाह। अचिन्त्य इति। उक्तरूपः परो न विराडित्याशङ्क्याऽऽह। स एवेति। पर एव स्वयमेवाव्याकृतसूत्रद्वारा विराड्भावेनोद्भूत इत्यर्थः ॥ ५१ ॥

पुरुषोऽस्मीत्युपास्त्यर्थं पुरुषार्थोऽयमुच्यते ॥
ओषतीत्युक्तितः साक्षाद्गुणोपास्तिफलश्रवात् ॥ ५२ ॥

वागादौ धेन्वादिधीवत्पुरुषगुणे विराजि धीर्नहि तेन ध्यातुस्तादात्म्यमन्यस्यान्यत्वायोगादित्याशङ्क्याऽऽह। पुरुष इति। पुरुषगुणे विराज्यहंग्रहोपास्तिरिहेष्टेत्यत्र पुरुषनिरुक्तिं प्रमाणयति। इत्युपास्त्यर्थमिति। फलान्तराद्दृष्टेर्ध्यानार्थपुरुषनामनिर्वचनेऽपि कथं तद्गुणे विराज्यहंग्रहोपास्तिरित्याशङ्क्याऽऽह। ओषतीति। साक्षात्सूत्रभावस्य पुरुषगुणविराडुपास्तिफलस्य यथोक्तवाक्यतः श्रुतेस्तत्क्रतुन्यायेन विराज्यहंग्रहोपास्तिसिद्धिरित्यर्थः ॥ ५२ ॥

अभिप्लुतं भयेन फलं यज्ज्ञानकर्मणोः ॥
एवंमदिसमप्येतत्संसारं नात्यवर्तत ॥ ५३ ॥

ज्ञानकर्मफलं सौत्रं पदमुत्कृष्टत्वान्मुक्तिरित्युच्यते तदन्यमुक्त्यभावात्तद्धेतुसम्यग्धीसिद्धये प्रवृत्तिरनर्थिकेत्याशङ्क्य सोऽबिभेदित्यस्य तात्पर्यमाह। अभिप्लुतमिति। ज्ञानकर्मफलं त्रैलोक्यात्मकसूत्रत्वमुत्कृष्टमपि संसारान्तर्भूतमेव न कैवल्यमिति वक्तुमुत्तरवाक्यमित्यर्थः ॥ ५३ ॥

प्रत्यग्याथात्म्यविज्ञानविरहादन्यसाधनः ॥
यावत्किंचित्फलं नादः सर्वानर्थनिवृत्तये ॥ ५४ ॥

ताभ्यामाप्तसूत्रत्वादशेषानर्थवस्तेर्न सौत्रं फलं संसारान्तर्गतमित्याशङ्क्याऽऽह। प्रत्य

गिति । तत्त्वज्ञानं विना हेत्वन्तराधीनं सौत्रं फलं नानर्थस्यार्थध्वंसार्थं भयारत्यादिदृष्टेरित्यर्थः ॥ ९४ ॥

निरस्तातिशयं कर्म ज्ञानं चाऽऽप्यापि बालवत् ॥
यतोऽबिभेदविद्यावानतोऽसावस्मदादिवत् ॥ ९५ ॥

ज्ञानकर्मफलस्य प्रजापतेर्न भयादि युक्तं तद्धेत्वविद्याभावादित्याशङ्क्याऽऽह । निरस्तेति । उत्कृष्टे कर्मज्ञाने लब्ध्वा तत्फलभूतोऽपि मूढवयतो विराड्भीतवानतो भयादिकार्यदृष्ट्या सोऽविद्यावान्कल्प्यते समतमूढवत् । तस्य च विद्यमानाऽपि विद्याऽऽरब्धकर्मप्रतिबन्धान्न सर्वात्मनाऽविद्यां निवर्तयत्यधुनातनजीवन्मुक्तवदिति भावः ॥९५॥

न ह्यविद्यापनोदाय वस्तुयाथात्म्यसंश्रयात् ॥
कश्चिद्बिभेत्यबिभेच्च तेनाविद्वान्प्रजापतिः ॥ ९६ ॥

विराजो भयहेतुरविद्याऽस्तीत्यन्वयमुखेनोक्त्वा व्यतिरेकमुखेनाऽऽह । न हीति । मा तर्हि तस्य भयं भूत्तत्राऽऽह । अबिभेच्चेति । अन्वयव्यतिरेकसिद्धमर्थं निगमयति । तेनेति ॥ ९६ ॥

सत्यस्याथात्म्यविद्यैव निःशेषपुरुषार्थकृत् ॥
इत्येतत्प्रतिपत्त्यर्थं विराट्स्थानस्य कुत्सनम् ॥ ९७ ॥

कर्मज्ञानफलभूतो विराडुत्कृष्टत्वेन प्रागुक्तोऽधुना निन्द्यते तत्कथं पङ्कप्रक्षालनन्यायो नावतरेदित्याशङ्क्याऽऽह । सत्यामिति ॥ ९७ ॥

यतोऽबिभेद्विराट्पूर्वमेकाक्यस्मीति मूढवत् ॥
तस्मात्तत्कार्यभूतोऽत्र एकाकी च बिभेति ना ॥ ९८ ॥

तस्मादेकाकी बिभेतीत्यस्यार्थमाह । यत इति । कार्यगतेन भयलिङ्गेन कारणे प्रजापतौ तदनुमेयमिति भावः ॥ ९८ ॥

एवं भयाभिभूतः स ईक्षांचकेऽथ लोकवत् ॥
भयाहेतु यथातत्त्वदर्शनं कृतवान्विभुः ॥ ९९ ॥

स हायमित्यादेरर्थमाह । एवमिति । किं तदीक्षणमिति विवक्षित्वा पृच्छति । अथेति । परिहरति । भयेति । भयध्वस्तिहेतुभूतं तत्त्वज्ञानं प्रजापतिः संपादितवानित्यर्थः ॥ ९९ ॥

स्रजीव कल्पिताहिना संत्रासादाकुलेन्द्रियः ॥
आलोचयेद्यथातत्त्वं भीध्वस्त्यै तद्वदीश्वरः ॥ १०० ॥

लोकवदिति दृष्टान्तं सदार्ष्टान्तिकं स्पष्टयति । स्रजीति ॥ १०० ॥

---

१ ख. भीध्वस्त्यै ।

आलोचयन्यथातत्त्वमपास्ताभ्रान्ततद्भवम् ॥
अनन्यानुभवं साक्षाद्ददर्शैकात्म्यमात्मनि ॥ ६१ ॥

आलोचनफलमाह । आलोचयन्निति । दर्शनस्यापरोक्षत्वद्योतनार्थं साक्षादित्युक्तम् ॥ ६१ ॥

प्रत्यग्याथात्म्यविज्ञाननिरस्ताशेषमृत्युतमाः ॥
आप्ताशेषपुमर्थोऽथ सोऽमन्यत ततो विराट् ॥ ६२ ॥

ऐक्यसाक्षात्कारफलमाह । प्रत्यगिति । अथशब्दो यदर्थे । तत शब्दस्तदर्थे । अमन्यताऽऽत्मानं कृतार्थमिति शेषः ॥ ६२ ॥

देहेन्द्रियमनोबुद्धिभावाभावादिसाक्षिणम् ॥
प्रत्यर्थं यदिति प्राह तद्दृष्ट्या नेक्षते द्वयम् ॥ ६३ ॥

यन्मदन्यन्नास्तीत्यत्र यच्छब्दार्थमाह । देहेति । आदिपदेन तद्गुणादिग्रहः । वाक्यार्थान्वयित्वमर्थस्य यच्छब्दार्थस्य ज्ञानफलमाह । तद्दृष्ट्येति ॥ ६३ ॥

प्रतीच्येव यदेहाऽऽत्मा प्रत्यगात्मानमीक्षते ॥
अन्वयव्यतिरेकाभ्यां ब्रह्मास्मीति तदेक्षते ॥ ६४ ॥

वाक्यार्थज्ञानादेव तद्दृष्टदृष्टिप्रस्तोरल पदार्थधियेत्याशङ्क्य तां विना वाक्यार्थज्ञानायोगान्मैवमित्याह । प्रतीचीति । इहेति परिशोधनावस्थोक्तिः । आत्मेत्यधिकारिणो निर्देशः ॥ ६४ ॥

प्रत्यग्दृष्ट्या तदज्ञानतज्जं नैवेक्षते स्वतः ॥
ब्रह्मप्रतीचोरैकात्म्यात्तद्दूरीकृत्य गर्जति ॥ ६५ ॥

मदन्यन्नास्तीतिभागस्य तात्पर्यमाह । प्रत्यग्दृष्ट्येति । तत्त्वज्ञानात्तदज्ञानतत्कार्यादृष्टौ हेतुमाह । स्वत इति । उक्तेऽर्थे वाक्यमवतारयति । तदिति । ऐक्यमद्वीकृत्य भयहेतुभावमनुवदन्यन्मदन्यन्नास्तीति विराडाहेत्यर्थः ॥ ६५ ॥

प्रत्यक्त्वा यदिति प्राह त्वन्यन्नास्तीति चैकताम् ॥
कस्मादिति च हेतूक्तिर्भीत्याचिक्षिप्सया परम् ॥ ६६ ॥

तत्र वाक्यं योजयति । प्रत्यक्त्वामिति । परमित्यस्य केवलवाचिनः प्रत्यक्त्वामित्यादौ प्रत्येकं सम्बन्धः । उत्तरवाक्येन भयाक्षेपेच्छया प्रत्यग्ब्रह्मणोरैक्यादद्वितीयाभावहेतुः सूते यदित्यादिवाक्यमित्यर्थः । यद्वा परमुत्तरं वाक्यं भीत्याक्षेपार्थं प्रवृत्तमित्यर्थः ॥ ६६ ॥

प्रत्यक्त्वा ब्रह्मणो यस्माद्ब्रह्मता चाऽऽत्मनः स्वतः ॥
एवं सति कुतो मे भीरिति विद्वांस्तथायते ॥ ६७ ॥

कस्मादित्यादिवाक्यतात्पर्यमुक्तहेत्वनुवादपूर्वकमाह । प्रत्यक्त्वेति । तस्माद्द्वितीयाभावाद

भावो भयहेतोरिति शेषः । भयहेत्वभावे फलितमाह । एवमिति । लज्जावानिव भवतीत्यर्थः ॥ ६७ ॥

ब्रह्मविद्यामृते नान्यद्भयहेतुविनाशकृत् ॥
संभाव्यमिति नः प्राह तत एवेति च श्रुतिः ॥ ६८ ॥

तत एवेत्यादेरर्थमाह । ब्रह्मेति । अस्मिन्नर्थे विद्वदनुभवसमुच्चयार्थश्चकारः ॥६८॥

प्रत्यगज्ञानमेवैकं भीतिहेतुर्भवेद्यदि ॥
तत एवेति वचनं तदेवं स्यात्समञ्जसम् ॥ ६९ ॥

किंतद्भीतिकारणं तदाह । प्रत्यगिति । अत्र हि प्रत्यग्ज्ञानाद्धेतुध्वस्त्या भीतिध्वस्तिरुच्यते न च ज्ञानमज्ञानादन्यद्ध्वंसि तद्भयहेतुरज्ञानमेवेत्यर्थः ॥ ६९ ॥

कस्माद्ध्यभैष्यदिति च पूर्वोक्तार्थसमर्थनम् ॥
श्रुत्याऽकारि कुतो भीतिर्ध्वस्ताज्ञानवतुऽद्वये ॥ ७० ॥

पूर्वेणोत्तरस्य पौनरुक्त्यमाशङ्क्य विदुषो हेत्वभावान्न भयमित्युक्तसमर्थनार्थमुत्तरमित्याह । कस्मादिति । समर्थनप्रकारं श्रौतमभिनयति । कुत इति । विदुषीति शेषः ॥ ७० ॥

प्रजापतेराविरभूत्कुत एकत्वदर्शनम् ॥
शास्त्राचार्यादितद्धेतोरसत्त्वात्तदसंभवः ॥ ७१ ॥

प्रजापतेर्ब्रह्मात्मैक्यज्ञानाद्भीतिध्वस्तिरुक्ता । इदानीं तस्य तज्ज्ञानं हेत्वभावादयुक्तमित्याक्षिपति । प्रजापतेरिति । यस्मादस्माकमैक्यधीस्तस्मादेव कस्यापि स्यादित्याशङ्कयाऽऽह । शास्त्रेति । अस्यार्थः—न तावत्तस्य शास्त्रश्रवणमाचार्याभावान्नापि सन्न्यासोऽमनुष्यत्वेन शास्त्रानधिकारान्मनुष्याधिकारं हि शास्त्रं हृद्यपेक्षया तु मनुष्याधिकारत्वादिति न्यायान्नापि शमाद्यैश्वर्यासक्तत्वात्तस्मादस्मासु प्रसिद्धशास्त्रादिविद्याहेत्वभावात्प्रजापतेरैक्यधीरयुक्तेति ॥ ७१ ॥

अन्यानपेक्षं तदभूदिति चेदेवमिष्यते ॥
अस्मदादेरपि तथा प्रसङ्गः स्यान्न चेष्यते ॥ ७२ ॥

अन्यस्मिन्नाचार्यादावनपेक्षमेव तदैक्यज्ञानं तस्य जातमिति सिद्धान्ती शङ्कते । अन्यानपेक्षमिति । कादाचित्कस्य कारणानपेक्षत्वमसिद्धमित्याह । नैवमिति । निरस्ते दोषमाह । अस्मदादेरिति । प्रसङ्गस्यानिष्टत्वमप्यभिनयाह । न चेति ॥ ७२ ॥

मतं जन्मान्तराभ्याससंस्कारोत्थमिदं यदि ॥
नैरर्थक्यप्रसक्तिः स्यात्सम्यग्ज्ञानस्य सर्वतः ॥ ७३ ॥

१ क. क्षते ।

प्रजापतेर्यजमानावस्थायामाचार्यस्य सत्त्वाच्छ्रवणाद्यावृत्तेरैक्यज्ञानोदयात्तत्संस्कारोत्थं तथाविधमेव तज्ज्ञानं फलावस्थायामपि निरपेक्षमस्तीति शङ्कते । मतमिति । अतिप्रसक्त्या दूषयति । नैरर्थक्येति । सर्वतः सर्वेष्वस्मदादिष्वपीति यावत् ॥ ७३ ॥

दग्धाशेषान्तरायस्य विराजोऽपि महत्तमः ॥
नाथासीदात्मविद्या नः काऽऽशाऽविद्यापनुत्तये ॥ ७४ ॥

कथं तस्य नैरर्थक्यमज्ञानध्वंसित्वेनार्थवत्त्वादित्याशङ्क्याऽऽह । दग्धेति । विद्याप्रतिबन्धविधुरस्यैव विराजो जन्मान्तरे सत्यपि विद्या यद्यविद्यां संसारहेतुं नादहत्तर्हि बहुप्रतिबन्धवतामस्माकं तद्वशात्तद्दाहार्थमाशाऽपि न युक्ता तस्माज्ज जन्मान्तरे तस्यैक्यज्ञानं जातमित्यर्थः ॥ ७४ ॥

अन्त्य एव तमोघाती प्रत्ययश्चेन्मतं यदि ॥
स्यादनैकान्तिको हेतुरन्यान्त्येष्वसमीक्षणात् ॥ ७५ ॥

नन्वस्मिन्नेव जन्मनि तस्यैक्यधीरनपेक्षा प्रजायते । ज्ञानमप्रतिघं यस्येतिस्मृतेः । न च तदुत्पत्त्यनन्तरमेव सहेतुं बन्धं निरुणद्धि भयारत्यादिफलेनाऽऽरब्धकर्मणा प्रतिबन्धादतो मरणकालीनं ज्ञानमज्ञानध्वंसीति चोदयति । अन्त्य इति । एवकारश्चेच्छब्दार्थानुवादी । प्रवृत्तफलस्य कर्मणः स्वोपपादकाज्ञानलेशध्वंसिज्ञानशक्तिप्रतिबन्धकत्वेऽपि जन्मान्तरादिसर्वसंसारहेत्वज्ञानध्वंसिज्ञानसामर्थ्यप्रतिबन्धकत्वे मानाभावान्मध्ये जातं ज्ञानमनिवर्तकमित्ययुक्तं वक्तुमन्त्यस्य च ज्ञानस्य निवर्तकत्वे किमन्त्यत्वं हेतुः किंवा ज्ञानत्वमाहोस्विदैक्यज्ञानत्वमिति विकल्प्याऽऽद्ये दोषमाह । स्यादिति । प्रजापतेरन्त्यमैक्यज्ञानमज्ञानध्वंसीत्यत्रान्त्यत्व हेतुरज्ञानध्वंसित्वेनानियतोऽन्यस्य यजमानस्यास्मदादीनां चान्त्येषु ज्ञानेषु तद्ध्वंसादृष्टेरित्यर्थः ॥ ७५ ॥

नान्त्योऽपिद्यापनुद्बोध इति सर्वत्र गम्यताम् ॥
ऐकात्म्यवस्तुबोधित्वादुपान्त्यमत्ययो यथा ॥ ७६ ॥

द्वितीयं दूषयति । नान्त्य इति । अस्मासु प्रजापतौ च नान्त्यं ज्ञानं ज्ञानत्वादज्ञानध्वंसि पूर्वज्ञानेषु बन्धहेत्वज्ञानध्वंसित्वादृष्टेर्ज्ञानत्वहेतोरनैकान्त्यादित्यर्थः । तृतीयं प्रत्याह । ऐकात्म्येति । प्रजापतेरन्त्यमैक्यज्ञानं तथात्वादज्ञानध्वंसीत्ययुक्तमुपान्त्यतादृग्ज्ञानवदन्तेऽपि तद्योगाद्गुपान्त्यहेतोरनैकान्त्यादित्यर्थः ॥ ७६ ॥

स्याद्वा सत्साधनोत्पत्तेर्लौकिकवज्ज्ञानमात्मनः ॥
यथेह कार्यकरणैः पुण्यकर्मोद्भवैर्नृणाम् ॥ ७७ ॥
प्रज्ञा मेधा स्मृतिः स्थैर्यं ज्ञानादावयसीयते ॥
वैशारद्यं तथैव स्याद्विराजोऽपि महाधियः ॥ ७८ ॥

प्रजापतेरैश्वर्यधीरयुक्तेति पूर्वपक्षे सिद्धान्तयति । स्याद्वेति । वाशब्दः पक्षव्यावृत्त्यर्थः । प्रजापतेः सुप्तप्रबुद्धवत्प्रकृष्टादृष्टोत्थकार्यकारणवत्त्वात्पूर्वकल्पीयपदपदार्थवाक्यस्मरणवतः स्मृतिविपरिवर्तिवाक्याद्विचार्यमाणाददृष्टसहकृतात्तत्त्वज्ञानं स्याल्लोके विशिष्टादृष्टोत्कृष्टकार्यकरणानां प्रज्ञाद्यतिशयदर्शनाच्चेन च ज्ञानेन जन्मान्तरादिहेतुविद्याक्षयेऽप्यारब्धं कर्म तज्जं च भयारत्यादिविद्यालेशतो भविष्यतीति भावः । लोकवदित्येतद्व्याचष्टे । यथेति । इहेति व्यवहारभूमिरुक्ता । कार्यकरणैर्युक्तानामिति शेषः । यथोक्तकार्यकरणवन्तो मनुष्या न संभवन्तीति शङ्कां निवारयति। नृणामिति । स्याद्वेत्यादिनोक्तं दार्ष्टान्तिकमाह । ज्ञानादाविति । उक्तदृष्टान्तात्प्रजापतेरपि निरतिशयज्ञानकर्मवासनावतस्तज्जकार्यकरणयुक्तस्य ज्ञानवैराग्यादौ वैशारद्यं गम्यतेऽतस्तस्य ब्रह्मास्मीति ज्ञानमप्याचार्याद्यपेक्षां विना स्मर्यमाणवाक्यादेव स्यादित्यर्थः ॥ ७७ ॥ ॥ ७८ ॥

ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः ॥
ऐश्वर्यं चैव धर्मश्च सहसिद्धमिति स्मृतिः ॥ ७९ ॥

तस्य ज्ञानादिवैशारद्ये पौराणिकीं स्मृतिमुदाहरति । ज्ञानमिति । अप्रतिघमप्रतिबद्धं निरङ्कुशमित्येतत्प्रत्येकं संबध्यते । यस्यैतच्चतुष्टयं सहसिद्धं स निरवर्ततेति संबन्धः ॥ ७९ ॥

सहैव सिद्धं चेज्ज्ञानं भीतिहेतोरसंभवः ॥
ध्वान्तापध्वंसिरविणा न तमः सह जायते ॥ ८० ॥

सहसिद्धत्वस्मृतेः सोऽबिभेदित्यादिश्रुतिविरुद्धत्वादप्रामाण्यमिति विरोधाधिकरणन्यायेन शङ्कते । सहैवेति । सत्येव सहजे ज्ञाने स्वहेतोर्भयाद्यपि स्यादिति चेत्तत्राह । ध्वान्तेति ॥ ८० ॥

नैवमन्योपदेशार्थप्रतिषेधपरत्वतः ॥
सहसिद्धगिरस्तस्मान्नैव दोषः प्रसज्यते ॥ ८१ ॥

श्रुतिस्मृत्योर्विरोधं समाधत्ते । नैवमिति । विरोधे चाप्रामाण्यं परस्परव्याघातादित्याचार्यो न चात्र सर्वविदग्धस्मृतेः स्पष्टोद्भानश्रुतेश्च मिथोविरोधवद्विरोधोऽस्तीत्याह । अन्येति । अन्येनाऽऽचार्येणोपदेशो यः क्रियमाणस्तस्यार्थस्य निषेधपरत्वात्सहसिद्धवाक्यस्य तज्ज्ञानात्प्राक्प्रजापतेर्भयाद्युपपत्तिरूध्वं चाज्ञानलेशादतो न विरोधोऽस्तीत्यर्थः ॥ ८१ ॥

श्रद्धातात्पर्यशुश्रूषाप्रणिपातादि साधनम् ॥
विद्याजन्मैकहेतूनां वैफल्यं चेन्न तद्यतः ॥ ८२ ॥

ज्ञानोत्पत्तेराचार्योद्यनपेक्षत्वे श्रद्धादिसाधनविधानानर्थक्यादनेकश्रुतिस्मृतिविरोधः

स्यादिति शङ्कते । श्रद्धेति । आदिपदेन शमादिग्रहः । पुरुषस्यैवार्थवत्त्वं च विशेषश्रुत्यादिविरुद्धमिति भावः । चोदितं विरोधं धुनीते । न तदिति । श्रद्धादिविध्यानर्थक्याभावे हेतुमाह । यत इति ॥ ८२ ॥

गुणवद्दोषवद्रूपविकल्पितसमुच्चितम् ॥
विधाजन्मैकहेतुत्वाल्लोकवत्स्यात्समञ्जसम् ॥ ८३ ॥

तमेव व्यनक्ति । गुणवदिति । गुणवत्त्वं दोषवत्त्वमित्यनेन रूपेण युक्तानां श्रद्धादीनां विकल्पितानां समुच्चितानां च विधानमन्यैकस्मिन्नुपयुक्तत्वात्तात्पर्यादिविधानं स्यादर्थवल्लोके रूपादिज्ञाने निमित्तविकल्पादिदृष्टेरित्यर्थः । श्रद्धादिषु गुणवत्त्वमुत्कर्षो दोषवत्त्वं निकर्ष इति भेदः ॥ ८३ ॥

रूपादिज्ञानसंभूतौ तद्धेतूनामनेकधा ॥
विकल्पो दृश्यते लोके तथेहापीति निश्चितिः ॥ ८४ ॥

लोकवदित्युक्तं विवृणोति । रूपादीति । तद्धेतूनां रूपादिधीहेतूनामालोकादीनामिति यावत् । इहेत्यैकात्म्यज्ञानोक्तिः ॥ ८४ ॥

गुणवद्दोषवत्त्वं च तथैव च समुच्चयः ॥
प्रबोधोत्पत्तिहेतूनां दृष्टो घोषादिकार्यकृत् ॥ ८५ ॥

न केवलं विकल्प एव तद्धेतूनां दृष्टः किंतु गुणवत्त्वादयोऽपीत्याह । गुणवदिति । रूपादिधीकार्यानुरोधी च समुच्चयादिरित्याह । घोषादीति । आदिपदं व्यवहारार्थम् ॥ ८५ ॥

द्वीपदंशादयो रात्रौ नेत्रगोचरसंगति—
मात्रेण रूपं वीक्षन्ते नापेक्षन्ते ततोऽपरम् ॥ ८६ ॥

तत्रोदितानुदितहोमवद्व्यवस्थितं विकल्पमुदाहरति । द्वीपदंशादय इति । आदिशब्देन मार्जारवदन्येऽपि रात्रिचरा गृह्यन्ते कथमन्यथाऽन्धकारमध्यवर्तिनस्ते मूषकादि गृह्णीयुरित्यर्थः ॥ ८६ ॥

अतीतानागताद्यर्थज्ञानोत्पत्तौ च हेतुताम् ॥
योगिनां मन एव स्यादस्माकं सर्व एव तु ॥ ८७ ॥

विकल्पार्थं विधान्तरमाह । अतीतेति । हेतुतां गतमिति शेषः । ते हि योगजनितप्रकृष्टादृष्टवशाद्युक्तावस्थायां मनोमात्रेण करतलामलकवदशेषमपि पश्यन्तीत्यर्थः । कथं तर्हि समुच्चयस्तत्राऽऽह । अस्माकमिति ॥ ८७ ॥

दोषवद्गुणवत्त्वेन विकल्पोऽनेकधा पुनः ॥
मातृमानप्रमेयाणां गुणवद्दोषवत्त्वतः ॥ ८८ ॥

---

१ क ग 'त-वि' ।

विकल्पसमुच्चयावुक्तौ विधान्तरेण विकल्पं प्रपञ्चयति । **दोषवदिति** । मात्रादीनां धीहेतूनां दोषवत्त्वगुणवत्त्वाभ्यां कथमनेकधा निमित्तविकल्पस्तत्राऽऽह । **मात्रिति** । माता ज्ञानपरिणामी साभासान्तःकरणाख्यस्तस्य गुणवत्त्वं प्रकृष्टप्रज्ञत्वादि वैपरीत्यं दोषवत्त्वं मानं चक्षुरादि तस्य दोषस्तिमिरादिस्तदभावो गुणो मेयदोषो दूरत्वादिस्तत्र गुणः संनिकर्षादिरेवं निमित्तानां विकल्पसमुच्चयसंभवात्प्रजापतेः श्रद्धातिरेकेण ज्ञानोदयेऽपि न तद्वैयर्थ्यमस्माकं ज्ञानहेतुत्वाद्वेदान्ततात्पर्यादिज्ञानं सर्वेषामेव ज्ञानसाधनमाचार्यादिषु विकल्पसमुच्चयौ न चात्र नियामकाभावो यो ब्रह्माणं विदधातीति श्रुतौ प्रजापतिवृद्धापीश्वरानुग्रहादाजन्मतो वेदाविर्भावोक्तेरिति भावः ॥ ८८ ॥

नातिक्रान्तभवे त्वासीद्ब्रह्मविद्या प्रजापतेः ॥
इत्येतद्गम्यतेऽविद्याभयारत्यादिमत्त्वतः ॥ ८९ ॥

यत्तु तस्य यजमानावस्थायां ज्ञानं न जातमिति तदङ्गी करोति । **नेत्यादिना** । अङ्गीकारे हेतुमाह । **इत्येतदिति** ॥ ८९ ॥

विद्यायां चेन्न मोक्षोऽभूत्कस्याऽऽशा नो वृथा भवेत् ॥
मोक्षे भयश्रुतेर्नार्थस्तत्र को मोह इत्यतः ॥ ९० ॥

यत्पुनरन्त्यं ज्ञानमज्ञानध्वंसीति परिचोद्य परास्तं तदनुमोदते । **विद्यायामिति** । ब्रह्म वेदेत्यादिश्रुतेर्विद्याकालैव मुक्तिः कस्य प्रजापतेश्चेद्विद्यायां सत्यामपि सा नाभूत्तदा तत्र मनोरथोऽपि वृथाऽस्माकं स्यात्तत्र को मोह इत्यादिवाक्याद्विद्यासामर्थ्याद्भयाद्यभावश्रुतेश्च नार्थः स्यादतः स्याद्वा सत्साधनोत्पत्तेरित्यत्रोक्तमुपेयमित्यर्थः । यद्वा यदि विद्यायां विद्यमानायामेव प्रजापतेर्मोक्षो नाऽऽसीत्तर्हि कस्य मोक्षविषयो मनोरथो वृथा न स्यान्नहि प्रजापतेर्विद्या मुक्तये न पर्याप्ता सैवास्माकं तद्धेतुरिति श्रद्धातुं शक्यमिति पूर्वार्धस्यार्थः । उत्तरार्धस्य पूर्ववदेवार्थ ॥ ९० ॥

एकाकिनो विराजो वाऽविद्यासंवीतचेतसः ॥
पूर्वजन्मोत्थसंस्काराद्भयमाविरभूदिह ॥ ९१ ॥

वेदान्ततात्पर्यज्ञानमननिदिध्यासनसाधनात्प्रणिपाताद्यनपेक्षाज्जन्मान्तरीयतदपेक्षाद्वैक्यज्ञानाद्विराजो भयध्वस्तिरुक्ता । इदानीं केवलविराडैक्यज्ञानाद्भीतिध्वस्तिरिति पूर्वपक्षयन्नादौ सोऽबिभेदित्यस्य तात्पर्यमाह । **एकाकिन इति** । वाशब्दः सिद्धान्तव्यावृत्त्यर्थः । नन्वेकाकित्वं भयध्वस्तिहेतुर्द्वितीयाद्धि भयोत्थितिस्तत्कथमेकाकिनो विराजो भीतिस्तत्राऽऽह । **अविद्येति** । साऽपि न केवला भीतिहेतुः सुप्तावदृष्टेरित्याशङ्क्याऽऽह । **पूर्वेति** । यजमानकालीनभयजनितवासनासहायानुसारादिति यावत् । **इहेति** फलावस्थोक्तिः ॥ ९१ ॥

---

१ ख. °रित्यर्थः ॥ ८८ ॥

स्यादिति शङ्कते । श्रद्धेति । आदिपदेन शमादिग्रहः । पुरुषभेदेनार्थवत्त्वं च विशेषश्रुत्यादिविरुद्धमिति भावः । चोदितं विरोधं धुनीते । न तदिति । श्रद्धादिविध्यानर्थक्याभावे हेतुमाह । यत इति ॥ ८२ ॥

गुणवद्दोषवद्रूपविकल्पितसमुच्चितम् ॥
विद्याजन्मैकहेतुत्वाल्लोकवत्स्यात्तसमञ्जसम् ॥ ८३ ॥

तमेव व्यनक्ति । गुणवदिति । गुणवत्त्वं दोषवत्त्वमित्यनेन रूपेण युक्तानां श्रद्धादीनां विकल्पितानां समुच्चितानां च विद्याजन्मन्येकस्मिन्नुपयुक्तत्वात्तात्पर्यादिविधानं स्यादर्थवल्लोके रूपादिज्ञाने निमित्तविकल्पादिदृष्टेरित्यर्थः । श्रद्धादिषु गुणवत्त्वमुत्कर्षो दोषवत्त्व निकर्ष इति भेदः ॥ ८३ ॥

रूपादिज्ञानसंभूतौ तद्धेतूनामनेकधा ॥
विकल्पो दृश्यते लोके तथेहापीति निश्चितिः ॥ ८४ ॥

लोकवदित्युक्तं विवृणोति । रूपादीति । तद्धेतूनां रूपादिधीहेतूनामालोकादीनामिति यावत् । इहेत्यैकात्म्यज्ञानोक्तिः ॥ ८४ ॥

गुणवद्दोषवत्त्वं च तथैव च समुच्चयः ॥
मबोधोत्पत्तिहेतूनां दृष्टो बोधादिकार्यकृत् ॥ ८५ ॥

न केवलं विकल्प एव तद्धेतूनां दृष्टः किंतु गुणवत्त्वादयोऽपीत्याह । गुणवदिति । रूपादिधीकार्यानुरोधी च समुच्चयादिरित्याह । बोधादीति । आदिपदं व्यवहारार्थम् ॥ ८५ ॥

वृषदंशादयो रात्रौ नेत्रगोचरसंगति—
मात्रेण रूपं वीक्षन्ते नापेक्षन्ते ततोऽपरम् ॥ ८६ ॥

तमोदितानुदितहोमवदव्यवस्थितं विकल्पमुदाहरति । वृषदंशादय इति । आदिशब्देन मार्जारवदन्येऽपि रात्रिचरा गृह्यन्ते कथमन्यथाऽन्धकारमध्यवर्तिनस्ते मूषकादि गृह्णीयुरित्यर्थः ॥ ८६ ॥

अतीतानागताद्यर्थज्ञानोत्पत्तौ च हेतुताम् ॥
योगिनां मन एव स्यादस्माकं सर्व एव तु ॥ ८७ ॥

विकल्पार्थं विधान्तरमाह । अतीतेति । हेतुतां गतमिति शेषः । ते हि योगजनितप्रकृष्टादृष्टवशाद्युक्तावस्थायां मनोमात्रेण करतलामलकवद्दोषमपि पश्यन्तीत्यर्थः । कथं तर्हि समुच्चयस्तत्राऽऽह । अस्माकमिति ॥ ८७ ॥

दोषवद्गुणवत्त्वेन विकल्पोऽनेकधा पुनः ॥
मातृमानप्रमेयाणां गुणवद्दोषवत्त्वतः ॥ ८८ ॥

१ ख. ग. 'त-रि'।

विकल्पसमुच्चयावुक्तौ विभान्तरेण विकल्पं प्रपञ्चयति । दोषवदिति । मात्रादीनां धीहेतूनां दोषवत्त्वगुणवत्त्वाभ्यां कथमनेकधा निमित्तविकल्पस्तत्राऽऽह । मात्रिति । माता ज्ञानपरिणामी साभासान्तःकरणाख्यस्तस्य गुणवत्त्वं प्रकृष्टप्रज्ञत्वादि वैपरीत्यं दोषवत्त्वं मानं चक्षुरादि तस्य दोषस्तिमिरादिस्तदभावो गुणो मेयदोषो दूरत्वादिस्तत्र गुणः संनिकर्षादिरेवं निमित्तानां विकल्पसमुच्चयसंभवात्प्रजापतेः श्रद्धातिरेकेण ज्ञानोदयेऽपि न तद्वैयर्थ्यमस्माकं ज्ञानहेतुत्वाद्वेदान्ततात्पर्यादिज्ञानं सर्वेषामेव ज्ञानसाधनमाचार्यादिषु विकल्पसमुच्चयौ न चात्र नियामकाभावो यो ब्रह्माणं विदधातीति श्रुतौ प्रजापतिबुद्धावीश्वरानुग्रहादानन्त्यतो वेदाविर्भावोक्तेरिति भावः ॥ ८८ ॥

नातिक्रान्तभवे त्वासीद्ब्रह्मविद्या प्रजापतेः ॥
इत्येतद्गम्यतेऽविद्याभयारत्यादिमत्त्वतः ॥ ८९ ॥

यत्तु तस्य यजमानावस्थायां ज्ञानं न जातमिति तदङ्गी करोति । नेत्यादिना । अङ्गीकारे हेतुमाह । इत्येवदिति ॥ ८९ ॥

विद्यायां चेन्न मोक्षोऽभूत्कस्याऽऽशा नो वृथा भवेत् ॥
मोक्षे भयश्रुतेर्नार्थस्तत्र को मोह इत्यतः ॥ ९० ॥

यत्पुनरन्त्यं ज्ञानमज्ञानध्वंसीति परिचोद्य परास्तं तदनुमोदते । विद्यायामिति । ब्रह्म वेदेत्यादिश्रुतेर्विद्याकालैव मुक्तिः कस्य प्रजापतेश्चेद्विद्यायां सत्यामपि सा नाभूत्तदा तत्र मनोरथोऽपि वृथाऽस्माकं स्यात्तत्र को मोह इत्यादिवाक्याद्विद्यासामर्थ्यान्नयाथावश्रुतेश्च नार्थः स्यादतः स्याद्वा सत्साधनोत्पत्तेरित्यत्रोक्तमुपेयमित्यर्थः । यद्वा यदि विद्यायां विद्यमानायामेव प्रजापतेर्मोक्षो नाऽऽसीत्तर्हि कस्य मोक्षविषयो मनोरथो वृथा न स्यान्नहि प्रजापतेर्विद्या मुक्तये न पर्याप्ता सैवास्माकं तद्धेतुरिति श्रद्धातुं शक्यमिति पूर्वार्धस्यार्थः । उत्तरार्धस्य पूर्ववदेवार्थः ॥ ९० ॥

एकाकिनो विराजो वाऽविद्यासंवीवचेतसः ॥
पूर्वजन्मोत्थसंस्काराद्भयमाविरभूदिह ॥ ९१ ॥

वेदान्ततात्पर्यज्ञानमननिदिध्यासनसाधनात्प्रणिपाताद्यपेक्षाज्जन्मान्तरीयतदपेक्षादैक्यज्ञानाद्विराजो भयध्वस्तिरुक्ता । इदानीं केवलविराडैक्यज्ञानाद्धीतिध्वस्तिरिति पूर्वपक्षयन्नादौ सोऽबिभेदित्यस्य तात्पर्यमाह । एकाकिन इति । वाशब्दः सिद्धान्तव्यावृत्त्यर्थः । नन्वेकाकित्वं भयध्वस्तिहेतुर्द्वितीयाद्वै भयोत्पत्तिस्तत्कथमेकाकिनो विराजो भीतिस्तत्राऽऽह । अविद्येति । साऽपि न केवला भीतिहेतुः सुसावदृष्टेरित्याशङ्क्याऽऽह । पूर्वेति । यजमानकालीनभयजनितवासनासहायानुसारादिति यावत् । इहेति फलावस्थोक्तिः ॥ ९१ ॥

---

१ ख. °रित्यर्थः ॥ ८८ ॥

भयमध्वंसिनं हेतुमीक्षांचक्रेऽथ जातभीः ॥
मत्तो यद्यान्यदस्तीति स्वय कस्माद्बिभेम्यहम् ॥ ९२ ॥

स हायमित्यादेरर्थमाह । भयेति । ईक्षाकारण पृच्छति । अथेति । आर्तो जिज्ञासुरिति स्मृतेरार्तिरपि कदाचिदात्मेक्षणे हेतुरिति मत्वाऽऽह । जातभीरिति । यन्मदन्य दित्यादेरर्थमाह । मत्तो यदिति । यन्मत्तोऽन्यन्मे भयकारण तदन्यद्यस्मान्नास्ति तस्मादह कस्माद्धेतोर्बिभेमीति योजना । इतिपदमीक्षासमाप्त्यर्थम् । अपशब्दस्तस्यार्थे ॥ ९२ ॥

एक एवाहमस्मीह द्वितीयाद्धि भयोत्थितिः ॥
द्वितीयो न मदन्योऽस्ति कस्माद्धेतोर्भयं मम ॥ ९३ ॥

कस्माद्धीत्यादिवाक्य व्याकरोति । एक इति । अहशब्दस्त्रैलोक्यात्मा जीवाविष्टो देह । इहेति संसारमण्डलोक्ति । तथाऽपि कथ भीतिराहित्य तत्राऽऽह । द्वितीयादिति । चोरादिदर्शने भयजन्म प्रसिद्धमिति हिशब्दार्थ । तर्हि तद्धेतुर्द्वितीयोऽपि कल्प्यता नेत्याह । द्वितीय इति । प्रतीतिर्हि प्रत्येतव्ये मान न च द्वितीयो भात्यतो हेत्वभावाच्च भीतिरिति निगमयति । कस्मादिति ॥ ९३ ॥

तत एव विराडैक्यविज्ञानादेव तद्भयम् ॥
वीयाय न परज्ञानादतोऽरतिरपीष्यते ॥ ९४ ॥

तत एवेत्यादेरर्थमाह । तत इति । सिद्धान्ते परात्मैक्यज्ञान तत्पदेन परामृष्ट तान्निराचष्टे । नेति । तत्र हेतु । अत इति । भयविगमेऽपि प्रजापतेररतिरिच्छेत्यादि दृश्यते परज्ञाने च तदयोगो निमित्ताभावादतो न तस्य तज्ज्ञानाद्भीतिध्वस्तिरित्यर्थ ॥ ९४ ॥

एकाक्यस्मीतिविज्ञानात्त्रैलोक्यात्मैकगोचरात् ॥
अगाद्भय यतोऽतोऽभूदरतिस्तस्य कामिनः ॥ ९५ ॥

कथ पुनर्भयस्तर्भीतेस्तस्यारतिरित्याशङ्क्योत्तमनुवदति । एकाकीति । अद्वैतज्ञान व्यावर्तयति । त्रैलोक्येति । यस्मादेकाकित्वज्ञानाद्भयमपगत तस्मादेतस्यारतिरासीदित्याह । यत इति । ननु भीतिनिवर्तकमैक्यज्ञानमरतिमपि निवर्तयेत्तत्तु तामुत्पादयेदत आह । कामिन इति । असहायमेकाकित्वज्ञान भीतिध्वसि कामसहितमरतिहेतुरिति भाव ॥ ९५ ॥

सम्यग्विज्ञानविध्वस्तावविद्यायाः कुतोऽरतिः ॥
ध्वस्ताप्यस्यापि सा चेत्स्यादनिर्मोक्षः प्रसज्यते ॥ ९६ ॥

---

१ क 'पीष्यते । २ ख 'पन' ।

परज्ञानाद्धीतिध्वस्तावपि कामुकस्यारतिः स्यादित्याशङ्क्याऽऽह । सम्यगिति । ज्ञानिनो ध्वस्ताज्ञानस्य न कामोऽपि युक्तो हेत्वभावात्तत्कथमरतिरित्यर्थः । विपक्षे दोषमाह । ध्वस्तेति । निवृत्ताविद्यस्यापि यद्यरतिरस्ति तथा सत्यनर्थत्वात्तस्य मुक्तेरनुपपत्तिः स्यादित्यर्थः ॥ ९६ ॥

नाविद्याघातिविज्ञानाद्भयध्वस्तिरभूद्विभोः ॥
अरत्युद्भूतिलिङ्गेन ह्ययमर्थोऽवसीयते ॥ ९७ ॥

प्रजापतेर्भीतिध्वस्तिर्न परैक्यज्ञानादिति फलितं निगमयति । नाविद्येति । उक्तेऽर्थे पूर्वोक्तमेव श्रौतं लिङ्गं स्मारयति । अरतीति । परदर्शनराहित्यमरतिमतां प्राणभृतां प्रसिद्धमिति हिशब्दार्थः ॥ ९७ ॥

न चेहावसरोऽस्त्यस्य सम्यग्ज्ञानस्य कश्चन ॥
पिण्डसृष्टौ प्रवृत्तायां नाकस्माज्ज्ञानगीः शुभा ॥ ९८ ॥

इतश्च न परज्ञानाद्विराजो भीतिध्वस्तिरित्याह । न चेति । विराजो मन्वादिसर्गाधिकारे परज्ञानस्य निरवकाशत्वं स्फोरयति । पिण्डेति । पिण्डशब्देन मन्वादिदेहो गृह्यते । अकस्मात्प्रकरणविच्छेदं विनेत्यर्थः ॥ ९८ ॥

प्रक्रियानुचितं वस्तु सुसाध्वपि समीरितम् ॥
अकालकुसुमानीव नैव प्रीतिकरं सताम् ॥ ९९ ॥

विराट्प्रकरणेऽपि परज्ञानं विशिष्टफलत्वादुपदिश्यतामित्याशङ्क्याऽऽह । प्रक्रियेति । अथात्र परैक्यज्ञानं भीतिध्वंसीति भाष्यकृतोक्तं तत्कथं भवाननुमन्यते तत्राऽऽह । समीरितमिति । भाष्यकारोक्तं विशिष्टफलमपि परैक्यज्ञानमनवसरदुस्थं विदुषां न हृदयंगममित्यत्र दृष्टान्तमाह । अकालेति ॥ ९९ ॥

मिथुनारतिमोहादेः प्रत्यग्याथात्म्यवेदिनः ॥
आगमैस्तु निषिद्धत्वात्कुतस्तस्येह संभवः ॥ १०० ॥

अरत्युद्भूतिलिङ्गाद्विराट्प्रकरणाच्च परविद्योऽनवकाशत्वमुक्तं तत्रैव लिङ्गान्तरमाह । मिथुनेति । आदिशब्देन द्वितीयेच्छादिग्रहः । इहेति प्रजापतिसृष्टिप्रकरणोक्तिः । तस्येति प्रकृतविद्वदुक्तिः ॥ १०० ॥

आत्मक्रीड आत्मरतिर्क्रियावानिति चाऽऽगमः ॥
तथाऽऽत्ममिथुन इति यस्त्वात्मरतिरित्यपि ॥ १०१ ॥

परज्ञानवतो मैथुनादिदुर्व्यापारवारकश्रुतिस्मृतिरूपागमानुदाहरति । आत्मेति । आत्मन्येव क्रीडा यस्य न त्वनात्मनि पुत्रादाविति तथोच्यते । आत्मनि रतिरेव क्रिया तद्वानिति क्रियान्तरं निरस्यते । किमिच्छन्कस्य कामायेत्यादिवाक्यं संग्रहीतुं चशब्दः ।

तथेत्युक्तागमानुसारेणेति यावत् । आत्मन्येव मिथुनं न द्वितीये वस्तुनीति यथोक्तम् । स्मृतेरर्थस्तु वक्ष्यते ॥ १०१ ॥

कार्यकारणसंबन्धः साविद्यस्यैव युक्तिमान् ॥
अपूर्वानपराद्युक्तेर्न ध्वस्तान्ध्यस्य युज्यते ॥ ॥ १०२ ॥

विराड्ज्ञानमेवात्र भयध्वस्ति न परज्ञानमित्यत्र लिङ्गान्तरमाह । कार्येति ॥१०२॥

अभ्युत्पन्नात्मबोधानामधिकारासमाप्तितः ॥
अरत्यादि यथा दृष्टं तथैव स्यात्प्रजापतेः ॥ १०३ ॥

एवं पूर्वपक्षयित्वा सिद्धान्तमाह । अभ्युत्पन्नेति । वसिष्ठवामदेवादीनामुत्पन्नसम्यग्ज्ञानानामपि स्वाधिकारसमाप्तिपर्यन्तमविद्यालेशादरत्यादिदर्शनात्प्रजापतेरपि समुत्पन्नसम्यग्बोधस्यैव यावदधिकारमबोधलेशेनारत्यादिसंभवात्परज्ञानादेव तस्य भयनिवृत्तिर्यावदधिकारमवस्थितिराधिकारिकाणामिति न्यायादित्यर्थः ॥ १०३ ॥

अप्रविष्टस्वभावस्य सशब्देन परिग्रहात् ॥
स एष इत्यत्र वाक्ये नैवाऽऽकस्मिकशब्दनम् ॥ १०४ ॥

यत्तु प्रक्रियानुचितमित्यादि तत्राऽऽह । अप्रविष्टेति । स एष इह प्रविष्ट इति वाक्ये सशब्देनाऽऽत्मैवेदमग्र आसीन्नान्यत्किंचनमिषदित्यत्रोक्तब्रह्मणोऽप्रविष्टस्वभावस्य परामर्शः । न ह्यप्रकृतं सर्वनाम्ना शक्यं परामृष्टुम् । न चान्यत्र अत्र प्रस्तुतं तद्वेदमिति च संनिहितमेतच्छब्देनानुकृष्यते । न चाव्याकृतवाक्येऽपि तच्छब्देन प्रकृतत्वं विना कारणतया ब्रह्मपरामर्शोऽतो यन्मदन्यदित्यादौ न प्रक्रियानुचितस्य परस्योक्ति । न च विराजोऽपि परं परिहृत्य स्वद्वत्वादि क्लिष्टमिति भावः ॥ १०४ ॥

असंतोषापक्षमाद्देतोश्चेतसो याऽनवस्थितिः ॥
सा विध्वस्तात्ममोहस्याप्यरतिः संबभूव ह ॥ १०५ ॥

भयभाजो विराजः संसारित्वं जीवन्मुक्तस्यैव दर्शयता परज्ञानादेव भयध्वस्तिरुक्ता संप्रति तस्य संसारित्वे हेत्वन्तरं वदन्स वै नैव रेम इत्यत्रारतिं व्याकरोति । असंतोषेति । अवधारणार्थो हशब्दः । अविद्यालेशवशादरतिराधुनिकजीवन्मुक्तेष्वपि प्रसिद्धेत्येतदर्थो वा । इष्टाप्राप्तिकृतो मानसो विषादोऽसंतोषस्तस्मादक्षमा कातरताऽन्तश्चित्तस्य याऽनवस्थितिररतिरुद्वासरूपा स्वानुभवसिद्धा सा पूर्वोक्तपरज्ञानध्वस्तमोहस्यापि विराजो मोहलेशाज्जातेत्यर्थः ॥ १०५ ॥

यतोऽरतिग्रहग्रस्तधिषणोऽभूत्प्रजापतिः ॥
एकाकी तेन तत्स्पृष्टवेको न रमते नरः ॥ १०६ ॥

तस्मादित्यादेरर्थमाह । यत इति । नरशब्देनाविद्वान्मनुष्यत्वाद्यभिमानवानु- ॥ १०६ ॥

श्रौत्याऽनया प्रसिद्ध्या तु कार्यलिङ्गैश्च कारणम् ॥
सदाऽनुमिन्वते सांख्यास्तथा चान्येऽपि वादिनः ॥ १०७ ॥

कार्यस्थारतिः कारणस्थारतेर्लिङ्गमित्यनुमानप्रक्रियां सूचयन्ती श्रुतिमाश्रित्य कारणं कार्यलिङ्गकानुमानैकगम्यमिति वादिभ्रान्तिरिति तद्भ्रान्तिमूलं प्रसङ्गाज्ज्ञापयति । श्रौत्येति । परिमितत्वादिलिङ्गसमुच्चयार्थश्चकारः । सदेति नित्यानुमेयत्वद्योतनम् । न च सांख्यग्रहणं परिसंख्यार्थमिति मत्वाऽऽह । तथा चेति । स्वभाववादिव्यतिरिक्तसर्ववादिपरिग्रहार्थोऽपिशब्दः ॥ १०७ ॥

अरत्यपनुनुत्सुः सन्स द्वितीयं यथारुचि ॥
विराडैच्छदृतेऽविद्यां नेच्छेशस्योपपद्यते ॥ १०८ ॥

स द्वितीयमैच्छदित्यस्यार्थमाह । अरतीति । कीदृशी द्वितीयस्येच्छाविषयतेति शङ्कित्वोक्तं यथारुचीति । परज्ञानवतो विराजोऽविद्याभावात्कथमिच्छेत्याशङ्क्याऽऽह । ऋत इति । प्राग्ज्ञानोत्पत्तेरज्ञानस्य सत्त्वादूर्ध्वं च तल्लेशादिच्छा तस्य युक्तेति भावः ॥ १०८ ॥

सोऽरत्यतिग्रहाविष्टस्तदपध्वस्तये विराट् ॥
संसक्तजायापुंमानो यावांस्तावान्बभूव ह ॥ १०९ ॥

स हैतावानासेत्यस्यार्थमाह । सोऽरतीति । स हि विराडरतिरूपातिविषमग्रहाविष्टस्तद्ध्वस्त्यर्थं स्त्रीपिण्डसंपिण्डितमात्मपिण्डं कल्पयन्सम्यक्सक्तयोर्दंपत्योरेकीभूतयोर्यत्परिमाणं पिण्डस्तत्परिमाणपिण्डवानात्मीयसकल्पमात्रादासीदित्यर्थः । मिथः संपृक्तदंपतिपिण्डपरिमाणस्य लोकप्रसिद्धत्वार्थो हशब्दः ॥ १०९ ॥

स्त्रीपुमांसौ परिष्वक्तौ यावन्मानौ बभूवतुः ॥
स तावत्परिमाणोऽभूद्योगेन परमेश्वरः ॥ ११० ॥

यथेत्यादिवाक्यं व्याचष्टे । स्त्रीपुमांसाविति । तावत्परिमाणत्वे हेतुमाह । योगेनेति । ध्यानकर्मतद्वासनासहितसकल्पसामर्थ्यादित्यर्थः ॥ ११० ॥

इच्छामात्रपरत्युत्थं पुंस्यलब्धास्थिति स्त्रियम् ॥
प्रयुङ्क्ते योग्यतस्तस्यास्तदलब्ध्याऽरतिः प्रभोः ॥ १११ ॥

स द्वितीयमैच्छदिति द्वितीयमात्रस्येष्टत्वश्रुतेस्तस्य कथं स्त्रीत्वं कथं वा दृष्टान्ते स्त्रीग्रहणमित्याशङ्क्याऽऽह । इच्छेति । एकाकित्वादरतिस्ततो द्वितीयेच्छा तन्मात्रं स्त्रीविशेषणादृते द्वितीयमात्रविषया तदरत्यपनोदासमर्थे पुंस्यनवस्था द्वितीयत्वेन स्त्रियमुपस्थापयति तदलाभाद्धि प्रजापतेररतिस्तस्मादरत्यपवाते स्त्रियो योग्यत्वात्सैव तदिच्छाकर्मात एव दृष्टान्तेऽपि स्त्रीग्रहणमित्यर्थः ॥ १११ ॥

---

१ ख. 'पुमानो या'।

कथमसंसारित्वं विरोधादित्याशङ्क्याऽऽह । अविद्येति । कल्पितसंसारित्वेन वास्तवासंसारित्वमविरुद्धं न हि कल्पितसर्पादिना रज्ज्वादे रज्ज्वादित्वविहतिरित्यर्थः ॥१२२७॥

प्रागज्ञातं तदैकात्म्यं यथैवानुभवान्मतम् ॥
ब्रह्मास्मीत्यपि संबोधस्तथैवानुभवाश्रयात् ॥ १२२८ ॥

अस्तु तर्हि वस्तुरूपाविरोधित्वाद्ध्वस्तिरध्यस्तसंसारित्वस्येत्याशङ्क्य विरोधिवाक्यीयबोधात्तद्ध्वस्तेर्मैवमिति मत्वा निवर्तकबोधं दृष्टान्तेनानुभूत्या साधयति । प्रागिति । वाक्यप्रवृत्तिरत्र प्रतियोगित्वेन विवक्षिता ॥ १२२८ ॥

प्रमेयाधिगमं कुर्वत्प्रमाणफलं यदि ॥
क्वान्यत्र फलवत्तरस्याज्ञातोऽन्यस्यान्मितेः फलम् ॥ १२२९ ॥

वाक्योत्पज्ञानमनुभवसिद्धमपि स्वप्रकाशेऽतिशयाहेतुत्वादफलमित्याशङ्क्याऽऽह । प्रमेयेति । प्रमेयमैकात्म्यं तस्याधिगमस्तद्गताज्ञानतद्ध्वंसस्तत्कुर्वदपि मानमफलं चेन्न क्वचित्तत्फलवत्स्यात्सकार्याज्ञानध्वंसादन्यत्तत्फलाभावादित्यर्थः ॥ १२२९ ॥

सोत्प्रासमिव चाऽऽहातो बाढमित्येवमादिना ॥
अस्त्वेषोऽवगते दोष इतोऽन्यः कीदृशो गुणः ॥ १२३० ॥

शास्त्रोत्थज्ञानस्य फलवत्त्वमुक्त्वाऽऽनर्थक्यमवगते चोद्यतेऽन्यत्र वेति विकल्प्याऽऽद्यमङ्गीकुर्वन्भाष्यमवतारयति । सोत्प्रासमिति । यतो वाक्यीयज्ञानं ब्रह्मणि फलवदस्मादितस्तमतः सोत्प्रासं परो हि सरोषो हसनीयो हासकनिकुञ्चितांसशीर्षेत्यादिना येनोत्प्रास्यते परिभूयते तेन परिमिततृशरीरविकारेणोत्प्रासेन सहितमिव यथोक्तविकारोपेताच्छुरितकपदवेदनीयहासपूर्वकमिव बाढमित्यादिना भाष्येण भाष्यकारो ब्रवीतीत्यर्थः । यथाऽऽह—"स्यादाच्छुरितकं हासः सोत्प्रासः स मनाक्स्मितम्" इति । किं तद्भाष्यकारेण यथोक्तहासपूर्वकमुक्तं तदाह । अस्त्विति । उपदेशानर्थक्याख्यं दोषमेषशब्देन परामृशति । नरके सति को दोष इतिवदानर्थक्याङ्गीकारो गतिरित्याशङ्क्याऽऽह । इत इति । वस्तुनि ज्ञाते कृतकृत्यता गुण एवैतद्बुद्ध्वेत्यादिस्मृतेरिति भावः ॥ १२३० ॥

अथावगमवैयर्थ्यं भवता परिचोद्यते ॥
तत्रापि चानवगमध्वस्तिः प्रतिवचो भवेत् ॥ १२३१ ॥

अज्ञाते वस्तुन्युपदेशवैयर्थ्यं चोद्यते न चासौ ज्ञानार्थस्तस्यापि वैयर्थ्यादिति द्वितीयं शङ्कते । अथेति । परिहरति । तत्रेति । यथोपदेशवैयर्थ्ये चोदिते ज्ञानार्थतया तदर्थवत्त्वमुक्तं तथा ज्ञानानर्थक्ये चोदितेऽपि तदर्थोऽज्ञानध्वस्तिरिति प्रत्युक्तिर्युक्तेत्यर्थः ॥ १२३१ ॥

---

१ क. ख. °दित्यादिना ।

ऐकात्म्ये तन्निवृत्तिश्चेदसंभाव्येति चोद्यते ॥
लब्धैकात्म्येन नैवेयं निवृत्तिः काम्यते श्रुतेः ॥ १२३२ ॥

सा वस्तुनो भिन्नाऽभिन्ना वाऽऽद्येऽद्वैतहानिर्द्वितीये न ज्ञानाधीनेति चोदयति । ऐकात्म्येति । अज्ञानध्वस्तेरयुक्तत्वमसत्त्वं वोच्यते । आद्येऽपि वस्तुनि ज्ञातेऽज्ञाते वा तदिति विकल्प्याऽऽद्यं दूषयति । लब्धेति । श्रुतेर्वस्तुनि लब्धे सत्यज्ञाननिवृत्तिर्न तेन वस्तुज्ञानवताऽर्थ्यते ऐकात्म्यज्ञानस्यैव पुमर्थत्वादात्मलाभान्न परमितिस्मृतेरतस्तदनुपपत्तावपि न क्षतिरित्यर्थः ॥ १२३२ ॥

अप्रसिद्धे त्वथैकात्म्ये निवृत्तिरिह चोद्यते ॥
तथा दृष्टविरोधो वः प्रागुवन्न निवार्यते ॥ १२३३ ॥

कल्पान्तरमनुवदति । अप्रसिद्ध इति । तत्रापि निवृत्तेरनुपपन्नत्वं पूर्ववदङ्गी करोति । तथेति । पक्षान्तरं प्रत्याह । दृष्टेति । अप्रसिद्धे वस्तुन्यज्ञाननिवृत्तेरसत्त्वेऽपि प्रसिद्धे तदसत्त्वमनुभवविरुद्धमित्यर्थः ॥ १२३३ ॥

सर्वस्यानुपपन्नत्वं सिद्धं दृष्टबलाश्रयात् ॥
दृष्टस्यानुपपन्नत्वं किमाश्रित्याभिधीयते ॥ १२३४ ॥

अज्ञाननिवृत्तेरनुपपन्नत्वमङ्गीकृत्योक्तम् । वस्तुतस्तु नैवं दृष्टिवशादनुपपत्तिनिरासादित्याह । सर्वस्येति ॥ १२३४ ॥

उक्तानि तावद्भूयांसि दूषणानि विभागशः ॥
अब्रह्मविषये क्लृप्ते ब्रह्मभावी पुमानिति ॥ १२३५ ॥

ब्रह्मभाविपुरुषकल्पनां निरस्य स्वपक्षे शास्त्रस्यार्थवत्त्वमुक्त्वा वृत्तं कीर्तयति । उक्तानीति । ब्रह्मभावी जीवो ब्रह्मेत्यब्रह्मविषये ब्रह्मशब्दे कल्पिते सर्वापत्तेरनित्यत्वमित्यादिदूषणान्यसांकर्येणोक्तानीति योजना ॥ १२३५ ॥

भूयोऽप्यस्यैव दार्ढ्यार्थं पूर्वपक्षाय यत्यते ॥
वाक्यार्थाभाससंजातभ्रान्त्युच्छित्त्यै प्रयत्नतः ॥ १२३६ ॥

अथोक्तनीत्या पूर्वपक्षस्य क्षिप्तत्वात्पुण्यो वै पुण्येनेत्यादिभाष्येण तदुद्भावनमफलमित्याशङ्क्याऽऽह । भूयोऽपीति । अस्य ब्रह्मभावी जीवो ब्रह्मेतिपक्षनिरासस्येति यावत् । तन्निरासो यया युक्त्या दृढो भवति सैव वाच्या निरस्तपक्षोत्थापनं त्वकिंचित्करमित्याशङ्क्याऽऽह । वाक्यार्थेति । वक्ष्यमाणवाक्यानामर्थाभासो जीवपरयोरापाततो भेदस्तस्मिन्नुत्पन्नभ्रान्तिध्वस्त्यै निरस्तस्यापि पक्षस्योत्थापनमित्यर्थः । ननु निरस्तपक्षोक्तिद्वारा वाक्यार्थाभासभ्रान्तिरपि किमिति निरस्यते तत्राऽऽह । प्रयत्नत इति । वाक्यीयस्यार्थे जिज्ञासूनां बुद्धिस्थैर्ये तात्पर्यादित्यर्थः ॥ १२३६ ॥

---

१ क. 'दृ तथै' ।

पुण्यः पुण्येन भवति पापः पापेन कर्मणा ॥
संसारिणं समुद्दिश्य श्रुतिरेतदुदाहरत् ॥ १२३७ ॥

भाष्योक्तां श्रुतिमनुभाष्य तात्पर्यमाह । पुण्य इति । एतत्कर्मफलयोगित्वमिति यावत् ॥ १२३७ ॥

तथैष हीति विस्पष्टं संसार्येवाभिधीयते ॥
तस्माद्विलक्षणस्तद्वदीश्वरोऽप्यभिधीयते ॥
स एष नेति नेतीति य आत्मेत्यादिना तथा ॥ १२३८ ॥

उदाहृतवाक्यवद्वाक्यान्तरमपि संसारिविषयमस्तीत्याह । तथेति । एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मेत्यादिश्रुतेरुपद्रष्टाऽनुमन्ता च भर्ता भोक्तेत्यादिस्मृतेर्वक्ष्यमाणन्यायाच्च संसारी परस्मादन्यः स चाहधीगम्यः स्पष्टं तद्भेदमनुभवतीत्यर्थः । जीवस्य परस्माद्वैलक्षण्येऽपि न तस्य ततो वैलक्षण्यमित्याशङ्क्याऽऽह । तस्मादिति । तद्वदीश्वरविलक्षणससारिवदित्यर्थः ॥ १२३८ ॥

तथाऽक्षपादकाणादतर्कशास्त्रेषु यत्नतः ॥
उपपत्तिशतैरीशः साध्यते वादिभिः पृथक् ॥ १२३९ ॥

परस्य तद्वैलक्षण्य श्रुतितो दर्शयित्वा तत्रैवोपपत्तिमाह । तथेति । उपपत्तिशतैरिति क्षित्याद्युपलब्धिमत्कर्तृकं कार्यत्वाद्घटवदित्यादिभिरित्यर्थः । पृथक्ससारिभ्य इति शेषः । ईश्वरवादिनामीश्वरसाधने तात्पर्यं यत्नत इत्युक्तम् । न च जीवानामेवादृष्टद्वारा क्षित्यादिकर्तृत्व तेषां तदुपकरणोपादानादिसाक्षात्काररहितत्वादतः संसारिभ्यो विलक्षणस्तत्कर्तेति भावः ॥ १२३९ ॥

दुःखापनयनार्थित्वप्रवृत्तेर्दर्शनादपि ॥
अत्यन्तभेदो विज्ञेयः ससारीश्वरयोरतः ॥ १२४० ॥

तयोर्मिथो भेदे हेत्वन्तरमाह । दुःखेति । जीवस्य स्वगतदुःखध्वसे दुःखं मे मा भूदित्यर्थित्वेन प्रवृत्तिर्दृष्टा नेशस्य साऽस्ति दुःखाभावादतस्तद्भेद इत्यर्थः । अभेदे क्वचित्प्रवृत्तिरन्यत्र नेतिवैधर्म्यायोगादित्यत शब्दार्थः ॥ १२४० ॥

तं विदित्वेतमेवेति कर्मकर्तृविभागतः ॥
क्षेत्रज्ञेश्वरयोरुक्तेर्मृगव्याधादिभेदवत् ॥ १२४१ ॥

मिथो भेदे युक्तिमुक्त्वा तत्रैव श्रौतं लिङ्गमाह । तमिति । "तं विदित्वा न लिप्यते" "एतमेव प्रव्राजिनो लोकमिच्छन्त" "एतं वै तमात्मानं विदित्वा" "एतमितः प्रेत्याहमभिसंभवितास्मीति कर्मकर्तृभेदेन जीवेश्वरयोरुक्तेस्तयोरत्यन्तभेदो मृगव्याधयोरिवैकस्मिन्नेव कर्तृत्वायोगादित्यर्थः ॥ १२४१ ॥

---

१ ख 'व्याघ्रादि' । २ ख 'व्याघ्रयो' ।

मुमुक्षोर्गतिमार्गस्य देशभेदोपदेशतः ॥
भेदेऽसति गतिः केयं गन्तृगन्तव्ययोर्भवेत् ॥ १२४२ ॥

तद्भेदे श्रौतलिङ्गान्तरमाह । मुमुक्षोरिति । तस्य गतिमार्गो देवयानः पन्थास्तस्य देशभेदोऽर्चिरादिपर्वविशेषस्तस्योपदेशस्तेऽर्चिषमित्यादिरतो गन्तृगन्तव्यभेदधीरित्यर्थः । तद्भेदाभावेऽपि गतिरुच्यतामित्याशङ्क्याऽऽह । भेद इति । असतीति च्छेदः ॥ १२४२॥

दक्षिणोत्तरमार्गोक्तिस्तथा सति विरुध्यते ॥
गन्तव्यदेशाभावाच्च गतिर्नैवोपपद्यते ॥ १२४३ ॥

मा भूद्गतिरित्याशङ्क्याऽऽह । दक्षिणेति । गत्यनङ्गीकारे दक्षिणमार्गस्य धूमाद्युपलक्षितस्येष्टादिकारिणं प्रत्युक्तिवज्ज्ञानिनं प्रत्युत्तरमार्गस्यार्चिराद्युपलक्षितस्योक्तिर्विरुध्येतातो गतिर्दुरपह्नवेत्यर्थः । अस्तु तर्हि गतिः सा च सकर्तृकत्वाद्गन्तारमपेक्षतां ततो विलक्षणगन्तव्यलाभस्तु कुतस्तत्राऽऽह । गन्तव्येति । तस्या हि कर्तृकर्मणोरपेक्षासाम्यात्तद्भेदाभावे नैव सा सिध्येदित्यर्थः । गन्त्रभावे गत्यभाववदितिदृष्टान्तार्थश्चकारः॥ १२४३॥

तथाऽभ्युदयकैवल्यसाधनानां विधानतः ॥
न हीश्वरस्य कैवल्यं साधनायत्तमिष्यते ॥ १२४४ ॥

जीवेशभेदे हेत्वन्तरमाह । तथेति । विधानतस्तथेति संबन्धः । अथैतानि परस्यैव विधास्यन्ते तत्कथं भेदस्तत्राऽऽह । न हीति । न तावदीशस्याभ्युदयार्थं साधनं विधेयं तस्य बन्धान्तर्गतस्वर्गाद्यभ्युदयसंबन्धायोगान्नित्यमुक्तत्वात्कैवल्यं तु तस्य नित्यसिद्धं न साधनाधीनमतो न तं प्रति साधनद्वयविधिर्जीवं प्रति च सोऽस्ति तद्भेदस्तयोरित्यर्थः ॥ १२४४ ॥

ब्रह्मभावी ततो नेशः किंतु तद्व्यतिरेकवाक् ॥
संसार्येवाभिधीयेत यथोक्तन्यायगौरवात् ॥ १२४५ ॥

जीवेशभेदे प्रामाणिकेऽपि ब्रह्मभाविपुरुषकल्पना कथमित्याशङ्क्योपसंहरति । ब्रह्मेति । पञ्चम्योः सामानाधिकरण्येन संबन्धः । ब्रह्म वा इदमित्यत्र ब्रह्मशब्देन नेशो गृह्यते ब्रह्मभावी तु जीवस्ततोऽन्यस्तेनोच्यते यथोक्तन्यायस्य जीवपरभेदप्रामाणिकत्वस्य दृढत्वादित्यर्थः ॥ १२४५ ॥

नैवं ब्रह्मोपदेशार्थशास्त्रानर्थक्यसक्तितः ॥
संसारिचिन्त्यर्थवास्य पुरुषार्थसमाप्तितः ॥ १२४६ ॥

ब्रह्मभाविनो जीवस्य ब्रह्मशब्दे ब्रह्मोपदेशानर्थक्यमिति दूषयति । नैवमिति । तदुपपादयति । संसारीति । यदत्र ब्रह्मशब्दं तज्ज्ञानादेव मुक्तिरिहेष्टा तदात्मानमित्यादिश्रुतेरतो जीवोऽब्रह्म चेज्जीवज्ञानादेव तत्सिद्धेः सत्यज्ञानादिब्रह्मोपदेशो वृथा स्यादित्यर्थः ॥ १२४६ ॥

न च ब्रह्मोपदेशस्य सर्वभावातिरेकतः ॥
शक्यं फलान्तरं वक्तुं येनासावर्थवान्भवेत् ॥ १२४७ ॥

जीवधियो मुक्तिफलत्वेऽपि ब्रह्मोपदेशस्य फलान्तरेणार्थवत्त्वमित्याशङ्क्याऽऽह । न चेति । सत्यज्ञानादिलक्षणब्रह्मोपदेशस्य ब्रह्मविदाप्नोति परमित्यादिश्रुत्या तद्भावे फले गम्यमाने तदतिरेकेण फलान्तरमभ्युदयरूपं तस्याशक्यं वक्तुमुक्तश्रुतिविरोधादतो न ब्रह्मोपदेशस्य प्रकारान्तरेणार्थवत्त्वमित्यर्थः ॥ १२४७ ॥

पुमर्थसाधनेऽन्यस्मिन्न चासौ विनियुज्यते ॥
मन्त्रवत्तेन तच्छास्त्रं स्यादनर्थकमेव तु ॥ १२४८ ॥

विधिशेषतया तदर्थवत्त्वमाशङ्क्य कर्मविधिशेषत्वेनोपास्तिविधिशेषत्वेन वेति विकल्प्याऽऽद्यं दूषयति । पुमर्थेति । अन्यस्मिन्नग्निहोत्रादिविधाविति यावत् । असाविति ब्रह्मोपदेशोक्तिः । तत्र वैधर्म्यदृष्टान्तो मन्त्रवदिति । इषे त्वेति शाखामाच्छिनत्तीत्यादिविनियोजकब्राह्मणवशादिषे त्वेत्यादिमन्त्रो यथा शाखाछेदनादौ विनियुक्तो न तथा ब्रह्मोपदेशोऽग्निहोत्रादौ विनियुज्यते विनियोजकश्रुत्याद्यभावादित्यर्थः । विनियोगाभावे फलमाह । तेनेति । तच्छास्त्रं ब्रह्मोपदेशार्थं सत्यज्ञानादिवाक्यमित्यर्थः । कर्मविधिशेषत्वेन ब्रह्मोपदेशस्यार्थवत्त्वायोगेन स्वतन्त्रतया तदर्थवत्त्वमावश्यकमिति तुशब्दार्थः ॥ १२४८ ॥

मतं दुःखिन एवासौ संपदर्थं विधीयते ॥
ब्रह्मास्मीत्यविनिर्ज्ञाते कथं ब्रह्मणि सा भवेत् ॥ १२४९ ॥

कल्पान्तरमाह । मतमिति । ब्रह्मोपास्तिस्तज्ज्ञानानपेक्षेत्याशङ्क्य व्यतिरेकमाह । अविनिर्ज्ञात इति ॥ १२४९ ॥

तस्मिंस्तु शास्त्राद्विज्ञाते शक्यते कर्तुमञ्जसा ॥
ब्रह्मसंपदतः शास्त्रं तादर्थ्यादर्थवद्भवेत् ॥ १२५० ॥

तत्रैवान्वयमन्वाचष्टे । तस्मिन्निति । अन्वयव्यतिरेकाभ्यां ब्रह्मज्ञानस्य तदुपास्त्युपयोगमुक्त्वा फलितमाह । अत इति ॥ १२५० ॥

ननु ब्रह्म यदि ज्ञातं तावतैव कृतार्थता ॥
न चेत्तत्संपदा किं स्याद्येन तामनुरुध्यते ॥ १२५१ ॥

सिद्धान्ती संपदमाक्षिपति । नन्विति । ब्रह्मज्ञानेऽपि विनोपास्तिं नास्ति कृतार्थतेत्याशङ्क्याऽऽह । न चेदिति । ब्रह्मज्ञानाभावान्न कृतार्थता तदुपास्तेरभावात्सेति विचित्रं पाण्डित्यमित्यर्थः ॥ १२५१ ॥

नैवं ब्रह्मावबोधस्य पारार्थ्येन फलत्वतः ॥
सर्वमेव यतो ज्ञानं परार्थं फलवन्मतम् ॥ १२५२ ॥

१ ख. ॰ध्यते ॥ १२५१ ॥

पूर्ववाद्याह । नैवमिति । ब्रह्मधीर्न स्वतन्त्रा पुमर्थहेतुर्ज्ञानत्वादाज्यादिज्ञानवदित्यर्थः । तदेव समर्थयते । सर्वमिति । मतं वार्तिककारादिभिरिति शेषः । अतो युक्तं प्रागुक्तमनुमानमित्यर्थः ॥ १२९२ ॥

उक्तत्वात्परिहारस्य नैवमेतद्भवेदिह ॥
ब्रह्मज्ञानाद्यदन्यत्र परार्थं ज्ञानमिष्यते ॥ १२९३ ॥

ब्रह्मधियः स्वतन्त्रफलाया. श्रुत्यनुभवाभ्यां संबन्धे साधितत्वात्तस्या न पारार्थ्यमित्याह । उक्तत्वादिति । एतदिति पारार्थ्यमिहेत्यात्मज्ञानं परामृष्टम् । उक्तानुमानस्य किं बाधकमित्याशङ्क्य कालातीतत्वं शुक्त्यादिज्ञाने व्यभिचारं च मन्वानोऽप्रयोजकत्वमाह । ब्रह्मेति । तज्ज्ञानमिति संबन्धः ॥ १२९३ ॥

सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते ॥
पराङ्गं चाऽऽत्मविज्ञानादन्यत्रेत्यवधारणात् ॥ १२९४ ॥

शब्दसाधुत्वज्ञानस्य शब्दे पुंसि वा संस्कारत्वेन प्रयोगाङ्गत्वं प्रकृत्य व्याकरणाधिकरणे वार्तिककारोक्तिमत्र मानत्वेनोदाहरति । सर्वत्रेति । ननु ज्ञानस्य विनियुक्तसंस्कारत्वं विनियोक्ष्यमाणसंस्कारत्वं वा न प्रतीयते नैवमुपांशुयाजाङ्गभूताज्यावेक्षणवदस्य विनियोक्ष्यमाणसंस्कारत्वोपपत्तेरित्याह । पराङ्गं चेति । तर्हि ज्ञानत्वादात्मज्ञानस्यापि कर्माङ्गतेति नेत्याह । आत्मेति । अपहतपाप्मादिशास्त्रेण मोक्षहेतुं तज्ज्ञानमावक्षाणेन तद्वर्जयित्वा ज्ञानान्तरमेव परार्थमित्यवधारणात्तत्स्वतन्त्रमेव मुक्तिफलमित्यर्थः॥१२९४॥

सामानाधिकरण्येन तथा ब्रह्मात्मशब्दयोः ॥
श्रुतौ श्रुतेर्न संपत्स्यात्संपद्येव न हि क्रमः ॥ १२९५ ॥

अहं ब्रह्मास्मीति संपदर्थमङ्गीकृत्य तच्छेषत्वं ब्रह्मोपदेशस्य निरस्य संपदमेव निरस्यति । सामानाधिकरण्येनेति । सोऽयमितिदृष्टान्तार्थस्तथाशब्दः । संपत्पक्षेऽपि सामानाधिकरण्यं मनोब्रह्मेतिवत्स्यादित्याशङ्क्य विधायकपदातिरेकेण ब्रह्मात्मपदयोः सामानाधिकरण्यं तत्र न युक्तमित्याह । संपदीति ॥ १२९५ ॥

आत्मा ब्रह्मेत्येवमादौ सामानाधिकरण्यगीः ॥
अन्यस्यान्यत्र संपत्स्यादद्वये सा कथं भवेत् ॥ १२९६ ॥

काऽसौ श्रुतिर्यत्र सामानाधिकरण्यश्रवणं ब्रह्मात्मशब्दयोरित्याशङ्क्याऽऽह । आत्मेति । संपदभावे हेत्वन्तरमाह । अन्यस्येति । अन्यत्र मनोगगनादावन्यस्य ब्रह्मण. संपद्दृष्टा न त्वद्वये ब्रह्मण्यप्रपञ्चे सा युक्तेत्यर्थः ॥ १२९६ ॥

द्रष्टव्यस्याऽऽत्मनस्तद्वदैकात्म्यं श्रुतिरब्रवीत् ॥
ब्रह्मादि सर्वमात्मेति संपन्नातोऽत्र युज्यते ॥ १२९७ ॥

---

१ क. ग. °ण्यस त° । २ ख. °ण्यधी । अ° ।

अथाद्वयत्वमसिद्धं सामानाधिकरण्यस्य वेदा प्रमाणमितिवदन्यथासिद्धेरत आह । द्रष्टव्यस्येति । आत्मा वा अरे द्रष्टव्य इतिप्रकृतात्मनो ब्रह्मत्ववदिदं सर्वं यदयमात्मेति श्रुतिरद्वयत्वमाहातः सपदनवकाशेत्यर्थः । ब्रह्मादीत्यादिशब्देन क्षत्रं त परादादित्यादि-वाक्योपात्तं क्षत्रादि गृह्यते ॥ १२५७ ॥

तद्भापत्तिश्रुतेश्चेयं सपक्षेहोपपद्यते ॥
ब्रह्मैव भवतीत्यादितद्भापत्तिरचास्यापि ॥ १२५८ ॥

अभेदेऽपि भेदं कल्पयित्वा सा प्रवर्ततामित्याशङ्क्याऽऽह । तद्भापत्तीति । चकारो दर्शितशङ्कानिरासार्थः । इहेत्यद्वयात्मोक्तिः । तद्भापत्तिश्रुतिमुदाहरति । ब्रह्मेति । सपत्पक्षे न तद्भापत्तिः स्थितस्य नष्टस्य वाऽन्यस्यान्यत्वायोगादित्यपेरर्थः ॥ १२५८ ॥

वचनात्स्यात्तद्भापत्तिः संपत्तेरिति चेन्मतम् ॥
नैव प्रत्ययमात्रत्वात्संपत्तेर्न तदिष्यते ॥ १२५९ ॥

तं यथेत्यादिश्रुतेः सूत्राद्युपास्तेस्तद्भाववद्ब्रह्मोपास्तेरपि तद्भावो वचनात्फलं स्यादिति शङ्कते । वचनादिति । संपत्तेरमानत्वात्तद्बलादन्यस्यान्यत्वं मानत्वेऽप्येवमानस्या-कारकत्वात्त्च सूत्राद्युपासनादप्यन्यस्यान्यत्वं स्थितस्य नष्टस्य वाऽनुपपत्तेरुक्तत्वात्त यथेत्यादिश्रुतिश्च न पूर्वसिद्धसूत्रादिभावमुपासितुराह तत्साहचर्यात्था तद्भावोपचारात्त-स्माद्ब्रह्मभावः स्वतःसिद्धो न सांपादिक इति समाधत्ते । नैवमिति ॥ १२५९ ॥

तमोमात्रान्तरायत्वाद्ब्रह्मप्याप्यते न तत् ॥
न च संपत्तमोहन्त्री मिथ्याज्ञानात्मकत्वतः ॥ १२६० ॥

ब्रह्मभावस्य स्वतस्त्वे किमिति तद्भावः सर्वैर्नानुभूयते तत्राऽऽह । तमोमात्रेति । तन्मात्रस्य व्यवधानाद्वस्तुभूतव्यवधानाभावाद्वस्तुतस्तु तद्ब्रह्मापि नाऽऽप्यते नानुभूयत इति यावत् । तमोव्यवधानादननुभवेऽपि तद्ध्वस्तिहेतुः संपदेवास्त्वित्याशङ्क्याऽऽह । न चेति । संपदोऽमानत्वात्त ततस्तमोध्वस्तिः किंतु सम्यग्ज्ञानादेवेत्यर्थः ॥ १२६० ॥

तमोध्वंसातिरेकेण सम्यग्ज्ञानस्य नापरम् ॥
फलमभ्याप्ति संभाव्यं ज्ञानस्याकारकत्वतः ॥ १२६१ ॥

सम्यग्ज्ञानस्य मोक्षफलस्य कथं तमोध्वस्तिः फलमित्याशङ्क्य तद्ध्वस्तिरेव मुक्तिरि-त्याह । तमोध्वंसेति । नाविद्याध्वस्तिर्मुक्तिः किंत्वात्मनो ब्रह्मत्वं तदुत्पत्तिहेतुर्ज्ञानमि-त्याशङ्क्याऽऽह । ज्ञानस्येति । विद्याया व्यञ्जकत्वादन्यस्यान्यभावानुपपत्तेरुक्तत्वात्त-मोध्वंसेतरब्रह्मभावायोगात्त फलान्तरमिति भावः ॥ १२६१ ॥

वस्तुनः शक्तिकृच्चापि वचनं ज्ञापकत्वतः ॥
ज्ञापकानि हि शास्त्राणि कारकाणि न कुत्रचित् ॥ १२६२ ॥

यथमन्यस्यान्यभावायोगो ब्रह्म वेदेत्यादिवाक्यमेव तच्छक्तिकरमित्यङ्गीकारात्त च

श्रौतेऽर्थे केवलतर्कप्रवेशः श्रुतेर्बलीयस्त्वादतः संपन्मुक्तिहेतुरत आह । वस्तुन इति । कथं ज्ञापकं तदाह । ज्ञापकानीति । शास्त्राणामादित्यवदर्थज्ञापकत्वं सर्वसंप्रतिपन्नमिति हिशब्दार्थः । कुत्रचिदिति विषयोक्तिः ॥ १२६२ ॥

अभीष्टपुरुषार्थस्य बाधश्चैवं प्रसज्यते ॥
निःशेषपुरुषार्थाप्तिकारि ब्रह्मावबोधनम् ॥ १२६३ ॥

ब्रह्मोपदेशस्य संपच्छेषत्वे दोषान्तरमाह । अभीष्टेति । न केवलमिष्टहानिरेव किंत्वनिष्टापत्तिश्चेत्यपेरर्थः । संपद्वशादिष्टापत्तिमाशङ्क्याऽऽह । निःशेषेति ॥ १२६३ ॥

तादृक्षं संपदो न स्यान्न च दुःख्यात्मबोधतः ॥
निःशेषपुरुषार्थाप्तिस्तद्बुद्धेरनृतत्वतः ॥ १२६४ ॥

संपदपि तथा किं न स्यादत आह । तादृक्षमिति । न हि तादृशं शास्त्रीयं पूर्णं फलमप्रमाणसंपन्मात्रेण सिध्यति तस्मादिष्टहानिः संपत्पक्षे दुर्वारेत्यर्थः । ननु बन्धमोक्षयोरैकाधिकरण्याज्जीवस्य बद्धत्वात्तस्यैव मुक्तिर्न चाऽन्यज्ञानादन्यमुक्तिरतः संसारिज्ञानादेव तत्सिद्धेर्ब्रह्मशब्देन संसारिग्रहे नेष्टहानिर्न च ब्रह्मोपदेशानर्थक्यं संसारिणं ब्रह्मत्वेन स्तोतुं तदुपदेशात्तत्राऽऽह । न चेति । संसारिज्ञानान्न मुक्तिरित्यत्र हेतुमाह । तद्बुद्धेरिति । जीवधियोऽपुंस्तन्त्रत्वेन निश्चत्वान्न ततो मुक्तिरन्यथा सर्वमुक्तेराधुनिकः संसारो न स्यान्न चोपदेशः स्तुत्यर्थो मुख्ये बाधाभावादतो ब्रह्मेति जीवोक्तावुपदेशानर्थक्यमिष्टनष्टिश्च स्पष्टेत्यर्थः ॥ १२६४ ॥

अपूर्वाद्यर्थ एवैकः प्राधान्येन विवक्षितः ॥
काण्डद्वयेऽपि नैतस्मादन्योऽर्थः कश्चिदीक्ष्यते ॥ १२६५ ॥

किंच ब्रह्मणोऽर्थान्तरस्य संसारिणो ब्रह्मशब्दत्वे बृहदारण्यकेऽभीष्टहानिः स्पष्टेत्याह । अपूर्वेति । अर्थान्तरस्यापि प्राणादेरत्र दृष्टेरवधारणायोगमाशङ्क्याऽऽह । प्राधान्येनेति । यथोक्तं वस्तु तात्पर्यगम्यमित्यत्र हेतुमाह । काण्डेति । मधुकाण्डे मुनिकाण्डे चेति यावत् । अर्थान्तरमत्र दृष्टमपि न तात्पर्यगम्यमित्यर्थः ॥ १२६५ ॥

एतावदर इत्यन्त उपसंहारदर्शनात् ॥
न चोपक्रमसंहारविरुद्धोक्तिः प्रशस्यते ॥ १२६६ ॥

अर्थान्तरवदपूर्वाद्यर्थस्यापि नात्र तात्पर्यविषयत्वं दृष्टेरविशेषादित्याशङ्क्याऽऽह । एतावदिति । मधुकाण्डान्ते तदेतद्ब्रह्मेत्याद्युपसंहारस्यापीदमुपलक्षणम् । अतश्चोपसंहारवशादुपक्रमेऽप्यद्वयं प्रतिपाद्यमित्यर्थः । ब्रह्म वा इदमित्युपक्रमे जीवपरयोर्भेदोऽस्तूपसंहारे त्वेतावदित्यादावभेद इति व्यवस्थामाशङ्क्याऽऽह । न चेति ॥ १२६६ ॥

तत्रैवं सति संसारी यद्यन्यो ब्रह्मणो भवेत् ॥
इष्टस्यार्थस्य बाधः स्यान्न च ध्वान्तनिराकृतिः ॥ १२६७ ॥

कथं तयोर्भिन्नार्थत्वमप्रशस्तमिति तत्राऽऽह । तत्रेति । तयोस्त्वदिच्छया भिन्नार्थत्वे सति ब्रह्मणोऽन्यो जीवः स्यादेव चेदशेषोपनिषदिष्टैक्यार्थबाधस्तज्ज्ञानादज्ञानाहानिश्च स्यादित्यर्थः ॥ १२६७ ॥

आरम्भेऽवसितौ शास्त्रं परस्परविरोधतः ॥
समञ्जसं न कृत्स्नं स्यात्संभवेऽप्यविरोधिनः ॥ १२६८ ॥

इष्टार्थबाधमुपगन्तुरनिष्टापत्तिमाह । आरम्भ इति । अविरुद्धार्थनिष्ठत्वेनैकवाक्यत्वे विरुद्धार्थनिष्ठतया तद्भेदकल्पनमयुक्तं यथोपांशुयाजवाक्ये जामितादोषोपक्रमे तत्प्रतिसमाधानोपसंहारे च वाक्यैक्यमाश्रित्य विष्णुरुपांशु यष्टव्य इत्यादिरर्थवाद उपांशुयाजमन्तरा यजतीति च विधिः । यथाऽऽहुः—एकं हीदं वाक्यं नानेकं विधातुमर्हतीति । तथेहाप्येकवाक्यतावशादेकार्थतेति भावः ॥ १२६८ ॥

समाख्यानुपपत्तिश्च ब्रह्मणोऽन्यस्य वेदनात् ॥
नापि रूढिस्तदन्यस्मिन्नश्वकर्णादिवद्भवेत् ॥ १२६९ ॥

ब्रह्मेत्यादिवाक्ये ब्रह्मशब्देन परस्मान्महे तद्विद्याया ब्रह्मविद्येतिसंज्ञानुपपत्तिरिति दोषान्तरमाह । समाख्येति । साध्वादिमति गोशब्दवज्जीवज्ञाने ब्रह्मविद्याशब्दस्य रूढिमाशङ्क्याऽऽह । नापीति । ब्रह्मज्ञानादन्यस्मिञ्जीवज्ञाने ब्रह्मविद्याशब्दस्य न रूढिस्तथाविधवृद्धव्यवहाराभावादित्यर्थः ॥ १२६९ ॥

आत्मेति वेत्तुरन्यश्चेन्न ब्रह्माहमिति श्रुतेः ॥
प्रतीचो ब्रह्मवत्प्रत्यग्ब्रह्मणोऽपि विशेषणम् ॥ १२७० ॥

अथोक्तब्रह्मशब्दार्थवेत्तुर्जीवादन्यस्तदात्मानमित्यात्मशब्देन परो गृह्यते । तद्विद्या च ब्रह्मविद्येति संज्ञासिद्धिरित्याशङ्क्ते । आत्मेतीति । वाक्यशेषविरोधान्नैवमित्याह । नेति । ब्रह्माऽऽत्मा भवत्वात्मा ततोऽन्यः सर्पस्य रज्ज्वभेदेऽपि रज्जोस्तदन्यत्वदृष्टेरित्याशङ्क्याऽऽह । प्रतीच इति ॥ १२७० ॥

ब्रह्मता न मदन्यत्र कौटस्थ्यान्मम नाशिषु ॥
ब्रह्मणो नान्यतः प्रत्यक्साक्षात्त्वाद्ब्रह्मवस्तुनः ॥ १२७१ ॥

तयोरन्योन्यविशेषणत्वेनान्योन्यात्मत्वमुक्तं व्यनक्ति । ब्रह्मतेति । ब्रह्मधर्मस्य कौटस्थ्यस्याऽऽत्मनि दृष्टेरात्मा ब्रह्म तद्धर्मस्याऽऽपरोक्ष्यस्य यत्साक्षादिति ब्रह्मणि श्रुतेर्ब्रह्माऽऽत्मेत्यर्थः ॥ १२७१ ॥

अव्यावृत्ताननुगतैर्मुख्यार्थश्च तथा सति ॥
ब्रह्मविद्येति सिद्धः स्याद्व्यपदेशो न चान्यथा ॥ १२७२ ॥

अन्योन्याभेदे नि सामान्यविशेष ब्रह्म सिध्यति तत्सिद्धौ तद्विद्यया ब्रह्मविद्येत्युक्ति-

१ ख 'टस्थात्स्वमना' ।

मुख्या स्यान्मिथो भेदे तु न ब्रह्मशब्दो मुख्यो नापि व्यपदेशस्तथेति फलितमाह । अभ्यावृत्तेति ॥ १२७२ ॥

भिन्नाभिन्नत्वगीर्याऽपि साऽपि दुःस्थितसिद्धिका ॥
विरुद्धधर्मसंबन्धो न प्रतीच्यस्त्यधर्मिणि ॥ १२७३ ॥

जीवब्रह्मणोरत्यन्तभेदे संज्ञायोगेऽपि भेदाभेदोपगमादभेदांशो तदुपपत्तिरित्याशङ्क्याऽऽह । भिन्नेति । अत्यन्ताभिन्नत्वोक्तिवदित्यपेरर्थः । तत्र हेतुः । विरुद्धेति । यत्र धर्ममात्रमेवास्थूलादिश्रुत्याऽपास्तं तत्र कुतो विरुद्धभेदाभेदधर्मवत्त्वं तथा चाभेदांशेन संज्ञासाधनमयुक्तमित्यर्थः ॥ १२७३ ॥

धर्मधर्म्यभिसंबन्धा गृह्यन्तेऽनात्मवस्तुषु ॥
प्रत्यक्षादिप्रमाणेन नावीपामात्मनि ग्रहः ॥ १२७४ ॥

धर्मित्वमनात्ममात्रवृत्ति धर्मिमात्रवृत्तित्वाद्धटत्ववदिति मत्वाऽधर्मित्वमात्मनः साधयति । धर्मेति । प्रत्यक्षादिभिरनात्मन्येव धर्मो धर्मी विशेषणं विशेष्यमित्यादयः संबन्धा गृह्यन्ते न त्वात्मनि प्रत्यक्षादिभिस्तेषां ग्रहणमात्मनोऽप्यक्षाद्ययोग्यत्वादित्यर्थः॥१२७४॥

आत्मानात्मनिमित्तेऽपि व्यपदेशोऽपि दुर्घटः ॥
विकल्पतो वा तत्सिद्धिर्ब्रह्मसंसारिणोर्भवेत् ॥ १२७५ ॥

स्यातां वा ब्रह्मात्मनोर्भेदाभेदौ तथाऽपि भिन्नाभिन्नविद्याया ब्रह्मविद्येति नियतोक्तिर्न स्यादित्याह । आत्मेति । निमित्तं विषय उभयविषये ज्ञाने स्वीकृतेऽपि व्यपदेशो न घटते तयोर्भिन्नाभिन्नत्वेन द्वयोर्विद्याविषयत्वे ब्रह्मविद्येति ब्रह्मणैव विद्याया विशेष्यत्वायोगादित्यर्थः । द्वयविषया विद्या ब्रह्मविषयाऽपि भवत्येवेति व्यपदेशसिद्धिमाशङ्क्याऽऽह । विकल्पतो वेति । द्वयोर्विद्याविषयत्वाविशेषाद्ब्रह्मविद्येति कदाचित्कदाचिज्जीवविद्येति व्यपदेशो विकल्पित. स्यादित्यर्थः ॥ १२७५ ॥

न चार्धवैशसं युक्तं तत्त्वज्ञाने विवक्षिते ॥
संशयो हि तथा श्रोतुः स्यादनिश्चितवाक्यतः ॥ १२७६ ॥

द्व्यात्मत्वाद्वस्तुनस्तद्विद्याऽपि द्व्यात्मिकेति समुच्चयमाशङ्क्याऽऽह । न चेति । कुक्कुट्यादेरेको देशः प्रसवाय कल्प्यते पच्यते देशान्तरमित्यर्धवैशसं तदिहायुक्तं न हि वस्तु ब्रह्म चाब्रह्म च तत्त्वज्ञानस्य विवक्षितत्वाद्विरुद्धस्यातथात्वादित्यर्थः । अस्तु तर्हि वस्तु संसार्यसंसारि वा वैकल्पिकमिति नेत्याह । संशयो हीति । विकल्पतो वस्तुनो ज्ञायमाने

१ क. ग. °धर्मिणि । २ ख. °त्यर्थः ।

तद्वाक्यात्संशय श्रोतु स्यात्ससार्यससार्युभयरूप वा वस्त्विति न च वस्तुनि संशयं प्रशासतीत्यर्थ । सशयितार्थस्य वाक्यस्य सशयजनकत्व प्रसिद्धमिति वक्तु हिशब्दः ॥ १२७६ ॥

निश्चितं फलवज्ज्ञानं यस्य स्यादिति शास्त्रतः ॥
न तु संशयितं यस्मात्संशयात्मा विनश्यति ॥ १२७७ ॥

किञ्च सशयिते ज्ञाने वाक्योत्थे तस्य फलवत्त्वासिद्धिरित्याह । निश्चितमिति । तत्र श्रुति प्रमाणयति । यस्येति । सशयस्यापि निश्चयवत्फलवत्त्वमाशङ्क्याऽऽह । न त्विति ॥ १२७७ ॥

परमात्मन्ययुक्ता चेत्साधकत्वादिकल्पना ॥
शास्त्रोपालम्भतो नैवं शास्त्रीयेयं प्रकल्पना ॥ १२७८ ॥

जीवपरयोरत्यन्तभेदस्य भेदाभेदयोश्चायोगात्परमेव ब्रह्म ब्रह्मशब्द न जीवस्तद्भावीत्युक्ते सत्यत्यन्ताभेदपक्षे चोदयति। परमात्मनीति । तदात्मानमेवावेदिति ज्ञातृत्व ब्रह्मण्ययुक्त तस्य ज्ञानमूर्तित्वादत एव न तत्कर्मत्वमपि न च स्वकर्तृकर्मकज्ञानान्मुक्ति परस्य नित्याकारकफलविलक्षणत्वादतस्तत्र ज्ञातृत्वादिकल्पनायोगात्र पर ब्रह्म ब्रह्मशब्दमित्यर्थ । शास्त्र ब्रह्मणि साधकत्वादि दर्शयति तथाचौरुषेयमदोष नोपलम्भार्हमतस्तस्मिन्नाविद्य साधकत्वादि स्वीकार्यमित्याह । शास्त्रेति ॥ १२७८ ॥

अक्षमा भवतः केयं साधकत्वप्रकल्पने ॥
किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम् ॥ १२७९ ॥

किंच सर्वस्यापि ससारस्य ब्रह्मण्यविद्ययाऽध्यासात्तदन्तर्भूतसाधकत्वाद्यपि तत्राध्यस्त मित्युपगमे नानुपपत्तिरित्याह । अक्षमेति ॥ १२७९ ॥

अनात्मवस्तु यत्किंचिद्ब्रह्माज्ञानवशोधतः ॥
ब्रह्मण्येव समध्यस्तं शुक्तिकारजतादिवत् ॥ १२८० ॥

न ससारो ब्रह्मण्यध्यस्तस्तस्य नित्यमुक्तत्वाज्जीवे त्वारोपितस्तत्र तद्दृष्टेरित्याशङ्क्याऽऽह । अनात्मेति । न तावज्जीवशब्दवाच्य ससारी ससारान्तर्भावात्तच्छब्दलक्ष्यार्थो ब्रह्मणो नातिरिच्यते तद्ब्रह्मण्येव स्वाज्ञानादनात्मवस्त्वध्यस्तमनात्मत्वात्समतवदित्यर्थ ॥ १२८० ॥

यस्मादेवमतोऽशेषससारानर्थकल्पना ॥
निदानब्रह्मज्ञानसमुच्छित्त्यै परा श्रुतिः ॥ १२८१ ॥

उक्तन्यायेन ब्रह्मभावी जीवो न ब्रह्मशब्दार्थ किंतु परमेव ब्रह्म तत्र च निःशेषदोषाभावस्तस्माद्ब्रह्मेत्याद्या श्रुति सर्वससारहेत्वनवच्छिन्नस्वाविद्यान्निरासि ब्रह्मविद्यार्थत्वेनाऽऽरब्धेत्युपसहरति । यस्मादिति ॥ १२८१ ॥

ब्रह्मेतिब्रह्मशब्देन कृत्स्नं वस्त्वभिधीयते ॥
प्रकृतस्याऽऽत्मकात्स्न्र्यस्य वैशब्दः स्मृतये मतः ॥ १२८२ ॥

परेष्टं ब्रह्म निरस्य स्वेष्टं तदाह। ब्रह्मेतीति। अत्र हीति प्रकृतमात्मकात्स्न्र्यं तस्य स्मारको वैशब्द इत्याह। प्रकृतस्येति ॥ १२८२ ॥

प्रकृतार्थोपरोधाच्च मुख्यब्रह्मार्थलाभतः ॥
यथोक्तदोषाभावाच्च ब्रह्म कृत्स्नमिहास्त्वतः ॥ १२८३ ॥

ब्रह्मशब्देनाद्वयग्रहे युक्तिमाह। प्रकृतेति। आत्मेत्येवोपासीतेति प्रत्यगात्माऽद्वयः प्रकृतोऽर्थस्तस्य ब्रह्मशब्देनाद्वयवस्तुग्रहेऽनाधात्तदेवात्र ब्रह्मशब्दमित्यर्थः। तत्रैव हेत्वन्तरमाह। मुख्येति। उपोद्धाते शङ्कितदोषाणामत्राभावाच्चैवमित्याह। यथोक्तेति। प्रकृतं वाक्यमिहेत्युक्तम्। परपक्षे प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गान्मुख्यार्थबाधादुपोद्धातोक्तदोषाच्च न स युक्तिमानित्याह। अत इति ॥ १२८३ ॥

ननु मानादिविरहादकृत्स्नमपि नेष्यते ॥
कुतः कात्स्न्र्यं यतः सर्वं मानादेव प्रसिध्यति ॥ १२८४ ॥

कृत्स्नं ब्रह्मेत्यत्राकृत्स्नपक्षोक्तदोषाभावेऽपि तत्पक्षोक्तदोषपरिहाराद्यथोक्तदोषाभावासिद्धिरिति शङ्कते। नन्विति। कृत्स्नपक्षे मानादि नास्त्यस्ति वेति विकल्प्याऽऽद्यं दूषयति। मानादीति। विना मानादि लौकिकं परिच्छिन्नमपि वस्तु न लभ्यते तदतिरेकेणालौकिकमद्वयं न सिध्यतीति किं वाच्यमित्यर्थः। मानादि विना किंचिदपि न सिध्यतीत्यत्र हेतुमाह। यत इति। यत्सिध्यति तन्मानादेव सिध्यतीति न्यायादित्यर्थः ॥ १२८४ ॥

अभ्युपेतौ च मानादेस्तस्य कात्स्न्र्यं विहन्यते ॥
न हि ब्रह्मातिरिक्तेऽर्थे सति संभाव्यतेऽजडैः ॥ १२८५ ॥

द्वितीयं निरस्यति। अभ्युपेतौ चेति। तस्येति ब्रह्मार्था षष्ठी। सति मानादौ ब्रह्मणो ब्रह्मताहानिरित्यत्र हेतुमाह। न हीति। अजडैरिति च्छेदः। सत्यन्यस्मिन्विवेकिभिर्ब्रह्म न संभाव्यते वस्तुपरिच्छेदादिति योजना ॥ १२८५ ॥

भिन्नाभिन्नत्ववादेऽपि ब्रह्माभिन्नात्मना भवेत् ॥
व्यावृत्तेर्न तु भिन्नेषु ब्रह्मता स्याद्घटादिवत् ॥ १२८६ ॥

भिन्नाभिन्नब्रह्मपक्षे भेदान्मानादिव्यवहारोऽभेदाद्ब्रह्मतेति सर्वाविरोधमाशङ्क्याऽऽह। भिन्नेति। यद्यपि तत्राभिन्नात्मना ब्रह्म भवेत्तथाऽपि भिन्नेषु सत्सु न ब्रह्मता स्याद्घटादिवद्व्यावृत्तेरतो ब्रह्मताऽब्रह्मता च दुर्घटेति योजना ॥ १२८६ ॥

वस्त्वन्तराभ्युपगमः प्रत्यकात्स्न्र्यविघातकृत् ॥
न तु मानाभ्युपगमो मितेस्तदवसानतः ॥ १२८७ ॥

प्रतीचोऽन्यवस्तुस्वीकारोऽद्वयत्वविरोधी न मानादिस्वीकारस्तस्य कल्पितत्वादद्वये समाप्तेरित्युत्तरमाह । वस्त्वन्तरेति ॥ १२८७ ॥

वस्त्वन्तरस्य सद्भावः सिद्धे कार्त्स्न्ये विरुध्यते ॥
मानाद्यपेक्षा सिद्धस्य नानुन्मत्तेन चोद्यते ॥ १२८८ ॥

किंचाद्वये वस्तुन्यदृष्टे मानादिभावो विरुध्यते दृष्टे वा नाऽऽद्य इत्याह । वस्त्वन्तरस्येति । अद्वये दृष्टे हि मानादेर्भावस्तेन विरुध्यतेऽन्यथा विरोध्यदृष्टेर्न विरोधधीरित्यर्थः । द्वितीयं दूषयति । मानादीति । अद्वये ज्ञाते वैफल्यादेव मानाद्यनपेक्षणान्न विरोधाशङ्केत्यर्थः ॥ १२८८ ॥

न चापि वास्तवी सिद्धिः प्रमात्रादिविरोधिनी ॥
सत्यामेव यतस्तस्यां संसारानर्थविभ्रमः ॥ १२८९ ॥

प्रतीच्यद्वयेऽज्ञाते ज्ञाते च मानादिभावो न विरोधीत्युक्तमिदानीं मानाद्यधीनज्ञानहीनमपि वस्तु स्वमहिम्ना वस्त्वन्तरस्य मात्रादेर्बाधकमिति नाद्वये तत्सिद्धिरित्याशङ्क्याऽऽह । न चेति । प्रमाणजनितसिद्धिवदिति वैधर्म्यमपेरर्थः । अद्वयवस्तुसत्ता मानाद्यविरोधिनीत्यत्र हेतुमाह । सत्यामिति । वस्तुस्वरूपस्फूर्तिस्तद्बाधिका चेत्कदाचिदपि संसारभ्रमो न स्यादतो न वास्तवी सिद्धिस्तद्विरोधिनीत्यर्थः ॥ १२८९ ॥

वास्तव्या अपि संसिद्धेः स्वमहिम्नैव नेष्यते ॥
प्रमाणविरहात्सिद्धिरेतच्च स्वानुभूतितः ॥ १२९० ॥

वस्तुन स्वरूपेण मानाद्यविरोधित्वे हेत्वन्तरमाह । वास्तव्या इति । न हि वस्तुस्वरूपज्ञप्तेरपि मानं विना स्वज्ञानत्वेन ज्ञप्तिरिष्टाऽज्ञानावृतायास्तस्या मानादेवाऽऽवरणवारणादतो मानादिसापेक्षं वस्तु न तद्विरोधीत्यर्थः । अज्ञानध्वस्तिद्वारा मानापेक्षया वस्तुनः सिद्धिरित्येतत्कुतः सिद्धं तत्राऽऽह । एतच्चेति । यद्वा वस्तुनि कथमावरकमज्ञानं सिद्धं तत्राऽऽह । एतच्चेति ॥ १२९० ॥

मेयकार्त्स्न्याविरोधित्वान्न मितेः शङ्क्यते भिदा ॥
मेयस्वरूपावसितेर्नान्या मानस्य मानता ॥ १२९१ ॥

मानाद्यपेक्षया वस्तुसिद्धौ मानमेयभेदादद्वैतहानिरित्याशङ्क्य मितेस्तदवसानत्वमित्येतत्प्रपञ्चयति । मेयेति । मितेस्तत्त्वमस्यादेर्मेयमैक्यं तदनुसारित्वात्तद्भेदो न शङ्क्यते तत्तीव्रमानस्याद्वैतमानस्य स्वार्थसाधकत्वैवेत्यर्थः । मानस्वरूपालोचनेऽपि स्वमेयाविरोध्यद्वैते मानमित्याह । मेयस्वरूपेति । मानस्य हि मानत्वं मेयस्वरूपावसानमेव तन्मानं तत्परिच्छेदकमित्यङ्गीकारात्तथा चाद्वैतमानमद्वैते पर्यवस्यत्तदविरोधीत्यर्थः ॥ १२९१ ॥

---

१ ख. मेयकार्त्स्न्याविं ।

न हि मेयप्रतिस्पर्धि तन्मानं मेयबोधितः ॥
मानप्रसादात्सिद्धं सत्स्पर्धेत मितिबाधितः ॥ १२९२ ॥

अद्वैतमानमद्वैताद्भिन्नमभिन्नं वा भिन्नं चेत्तद्विरोधि स्यादभिन्नं चेन्न मानमेयभाव एकत्र तदयोगादित्याशङ्क्याऽऽद्यं भेदं मत्वाऽऽह । न हीति । यद्वोक्तं व्यतिरेकेणाऽऽह । न हीति । तत्प्रतिस्पर्धित्वे तद्बोधकत्वानुपपत्तेरित्याह । मेयेति । मानस्य मेयाविरोधित्वे मेयस्याप्यद्वयस्य तदविरोधित्वाद्वैतादवस्थ्यमित्याशङ्क्य बुद्धीद्धो बोधो नित्यबोधबाधितैर्मानादिभिः स्पर्धमानस्तद्ध्वंसीति न द्वैतसंभावनेत्याह । मानेति ॥ १२९२ ॥

न हि वस्त्वनपाश्रित्य मानत्वं लभ्यते मितेः ॥
वास्तव्या अपि संसिद्धेर्न सिद्धिः स्यात्प्रमां विना ॥ १२९३ ॥

तर्हि मेयवन्मानस्यापि मेयविरोधितेत्याशङ्क्य मानस्य तदालम्बित्वात्तदभावे स्वरूपासिद्धेर्न तद्विरोधितेत्याह । न हीति । जडे तस्य मेयानुसारित्वेऽपि स्वप्रकाशे नैवं कृत्याभावादित्याशङ्क्य वास्तव्या अपीत्यादावुक्तं स्मारयति । वास्तव्या इति । वस्तुस्वरूपवज्ज्ञप्तेरपि सिद्धिरज्ञानध्वस्तिरूपा मानादेव सिध्यतीत्यर्थः ॥ १२९३ ॥

स्वप्रमेयार्पणं मुक्त्वा मानत्वेऽन्यत्र कारणम् ॥
अर्पितेन विरोधश्चेदस्तु कामं न दुष्यति ॥ १२९४ ॥

मानस्य स्वरूपसत्त्वमस्ति न वाऽऽद्ये द्वैतापातो द्वितीये मानत्वासिद्धिरित्याशङ्क्य स्वरूपसत्त्व विना स्वमेयबोधनमात्रेण प्रतिबिम्बादिवन्मानत्वसिद्धेर्मैवमित्याह । स्वप्रमेयेति । अन्यत्स्वरूपसत्त्व *केवलव्यतिरेकाभावात् । न च स्वरूपसत्त्वाभावे स्वप्रमेयार्पकत्वमेव नेति युक्तं प्रतिबिम्बादेर्बोधकत्वाकारस्य स्वरूपसत्त्वराहित्यादिति भावः । प्रतिबिम्बादेरर्प्यमाणबिम्बादिना विरोधाभावायुक्तं मानत्वमद्वैतमाने त्वर्पिताद्वैतेन विरोधान्न तत्र मानतेति शङ्कते । अर्पितेनेति । विरोधमङ्गी करोति । अस्त्विति । कथं तर्हि मानतेत्याशङ्क्य मेयार्पकत्वादित्याह । न दुष्यतीति ॥ १२९४ ॥

प्राग्ज्ञानाज्ज्ञानकाले च मानं मेयोऽप्यपेक्षते ॥
प्रमाणकार्ये निर्वृत्ते नान्यत्किंचिदपेक्षते ॥ १२९५ ॥

मानस्य मेयविरोधिनो ध्वस्तेर्न तदर्पकत्वेन मानतेत्याशङ्क्यार्पणात्पूर्वं मेयाकाङ्क्षिते तस्मिन्नविरोधादूर्ध्वं चानपेक्षिते विरोधेऽपि न दोष इत्याह । प्रागिति । अर्थो हि ज्ञानोत्पत्त्यपेक्षया पूर्वकाले तत्काले च तदीयस्वरूपलाभार्थं मानमाकाङ्क्षति तदुत्पत्तेरूर्ध्वं तु कृत्याभावान्न तदपेक्षते तेन युक्तमविरोधेन मानस्य मेयार्पकत्वमित्यर्थः ॥ १२९५ ॥

* अत्र किंचिद्त्रुटितमिति प्रतिभाति ।

अज्ञातोऽर्थः प्रमेयः स्याज्ज्ञाते कोऽतिशयो मितेः ॥
अज्ञाते न विरोधोऽस्ति ज्ञाते चान्यानपेक्षतः ॥ १२९६ ॥

ज्ञानात्पूर्वं मेयस्य मानापेक्षा नोर्ध्वमित्युक्तं साधयति । अज्ञात इति । अद्वयमज्ञातं चेन्न मानादिविरोधो हेत्वभावात्तस्यैव मानगम्यत्वाच्च ज्ञातं चेत्तत्कृतातिशयाभावेन तदपेक्षाभावात्तथेत्युक्तमुपसंहरति । अज्ञात इति ॥ १२९६ ॥

मेयासाधारणात्मोत्थज्ञानस्यैव प्रमाणतः ॥
तस्य वस्त्वनुरोधित्वादभेदादविरोधिता ॥ १२९७ ॥

ज्ञातेऽनपेक्षितमपि मानं सत्त्वादद्वैतविरोधीत्याशङ्क्य विषयस्वरूपबोधिज्ञानस्यैव मानत्वादद्वैतमानस्यापि तद्बोधिनस्तदानुगुण्यात्तस्य स्वमेयाद्भेदाभावान्न विरोधितेत्याह । मेयेति ॥ १२९७ ॥

पश्येदात्मानमित्यत्र नियोज्यो विषयादिरुक् ॥
न लभ्यते यतो नात ऐकात्म्ये स्याद्विरुद्धता ॥ १२९८ ॥

अद्वैते मानाद्यविरोधेऽपि ब्रह्मविद्ब्रह्मणो भिन्नो न वाऽऽद्ये द्वैततादवस्थ्यं द्वितीये मेयवेदितृत्वासिद्धिरित्याशङ्क्य वस्तुतो भेदाभावात्कल्पितभेदाच्च न किंचिदेतदित्याह । पश्येदिति । आत्मनो हि दर्शनमिहोपदिश्यते न चाऽऽत्मनोऽन्यो वेदिता वस्तुतोऽस्ति तस्यैकरसत्वादतो न वेदितारमादायाद्वैते विरुद्धत्वं शङ्कनीयमित्यर्थः ॥ १२९८ ॥

ब्रह्मश्रुतेश्च मुख्योऽर्थः प्रतीचोऽन्यत्र दुर्लभः ॥
यथाकथंचिदित्येतदतो नैवाभ्युपेयते ॥ १२९९ ॥

कल्पितं मानादिभेदमादाय कृत्स्नं ब्रह्मेत्युक्तम् । यत्तु यथाकथंचिच्छब्दार्थो यदि नामेत्यादि तत्राऽऽह । ब्रह्मेति । अकृत्स्नस्य ब्रह्मत्वनिरासात्कृत्स्नमेव तदिति निश्चयात्ताङ्गीकारवादो युक्त इत्यर्थः । आत्मश्रुतेरित्युदाहरणं चकारार्थः ॥ १२९९ ॥

स्वत एवाऽऽत्मनः कार्त्स्न्यान्न कार्त्स्न्यं साधनाश्रयात् ॥
साधनायासतः प्राक्च ब्रह्मैवाऽऽसीदितीरितम् ॥ १३०० ॥

यत्तु ब्रह्मत्वं किं स्वतस्तस्येत्यादि तत्राऽऽद्यमुपेत्य द्वितीयं निरस्यति । स्वत एवेति । स्वत कार्त्स्न्याङ्गीकारे श्रुतिमनुग्राहिकामाह । साधनेति । तस्याऽऽयासोऽनुष्ठानं तस्मात्पूर्वं च प्रत्यगात्मा ब्रह्मेति ब्रह्म वा इदमित्यादिश्रुत्योक्तमतः स्वत प्रतीचः कार्त्स्न्यमित्यर्थः ॥ १३०० ॥

आसीदित्यपि यः शब्दः स तन्मोहाद्यपेक्षया ॥
वस्तुवृत्तमपेक्ष्यैतन्नासीदस्ति भविष्यति ॥ १३०१ ॥

यत्तु ब्रह्मशब्देन परपरिग्रहे तस्य कालानवच्छिन्नत्वेऽऽसीदितिकालसंबन्धो न युक्त

१ ख. 'पक्षानबोधत्वं' ।

इति तत्राऽऽह । आसीदित्यपीति । अज्ञानतत्कार्यापेक्षया वस्तुनि कालसंबन्धवाची शब्दो न स्वरूपापेक्षयाऽन्यत्र भूताच्च भव्याच्चेतिश्रुतेरित्यर्थः । एतदिति प्रत्यग्ब्रह्मोच्यते ॥ १३०१ ॥

सदानुदितालुप्तैकज्ञानमूर्तिरिति त्वया ॥
कुतोऽज्ञायि विना मानान्मानं नाज्ञाततां विना ॥ १३०२ ॥

यत्तु ज्ञानमूर्तेर्न चाज्ञानमित्यादि तत्राऽऽह । सदेति । न हि विना मानमीदृगस्त्विति सिध्यति मानं चेत्तत्राज्ञानेन भाव्यमज्ञातस्य मेयत्वादतो वस्तुन्यविद्यावत्त्वेन विद्याऽभवतीत्यर्थः ॥ १३०२ ॥

एकं ब्रह्म सदा बुद्धं यथा मानानुभूतितः ॥
व्युत्पत्तेः प्रागविज्ञातं तथैवानुभवाश्रयात् ॥ १३०३ ॥

तत्र युक्तिसिद्धामविद्यामनुभवेन साधयति । एकमिति । सत्यज्ञानादिवाक्यं मानमनुभूतिर्विद्वदनुभवो व्युत्पत्तिर्वाक्यीयं ज्ञानमनुभवो न वेद्मीति धीरिति विवेकः ॥१३०३॥

व्युत्पत्तिफलमाश्रित्य तमोसंभव उच्यते ॥
व्युत्पत्तेः प्राक्तमस्त्वित्वं तत्साक्षित्वेऽपि गम्यते ॥ १३०४ ॥

ब्रह्मद्वारा त्वविद्येयं नेति संबन्धे ब्रह्मण्यज्ञानायोगोक्तेस्तद्विरुद्धं तत्राज्ञानं कथमिहेष्यते तत्राऽऽह । व्युत्पत्तीति । ज्ञानफलमज्ञानध्वंसोपलक्षितं स्फुरणमपेक्ष्य तद्रूपे ब्रह्मण्यज्ञानायोगस्तत्रोक्त इह तु ज्ञानात्पूर्वं तस्मिन्नज्ञानं तद्वशादुपेयमित्युच्यते तत्र विरोध इत्यर्थः । ज्ञानात्पूर्वमपि ब्रह्मणो नाज्ञानित्वं तत्साक्षित्वादित्याशङ्क्याऽऽह । व्युत्पत्तेरिति । अयुक्तमपि प्रत्यग्ब्रह्मणोऽज्ञानित्वमनुभवसिद्धमित्यर्थः ॥ १३०४ ॥

स्वसत्तयाऽऽत्मनो मोहं न यतो वस्तु हन्त्यतः ॥
शास्त्रानारम्भदोषोऽपि नैवास्मान्प्रति ढौकते ॥ १३०५ ॥

स्वतो ब्रह्म कृत्स्नमित्यत्र ब्रह्मनिर्यानर्थक्यदोषो निरस्तः । यच्च शास्त्रानारम्भानर्थक्यदोषश्चेति तत्राऽऽह । स्वसत्तयेति । शास्त्रोत्पन्नज्ञानादज्ञानध्वस्तेः शास्त्रारम्भोऽर्थवानिति समन्वयाधिकरणे स्थितमित्यर्थः ॥ १३०५ ॥

अनादेरपि वायर्थेत्तमसो नाभ्युपेयते ॥
प्रमाणानां प्रमाणत्वं न कस्चिद्वः प्रसिध्यति ॥ १३०६ ॥

अनादिनोऽज्ञानस्याऽऽत्मादनिवृत्तिं शङ्कते । अनादेरिति । अनिष्टमदेन प्रत्याह । प्रमाणानामिति । लौकिकवैदिकसर्वप्रमाणानां स्वविषयाऽज्ञाननिवर्तकत्वेन प्रमाणसिद्धिसंभवादित्यर्थः ॥ १३०६ ॥

अनुभूतेस्तदज्ञातं सिद्धं ब्रह्म पुरा मितेः ॥
अपास्ताज्ञानतत्कार्यं तत्तु मानात्प्रसिध्यति ॥ १३०७ ॥

यत्तु स्वानुभूतिविरोधोऽपीति तत्राऽऽह । अनुभूतेरिति । वाक्योत्थज्ञानात्पूर्वं यदज्ञातं ब्रह्म तत्कर्तृत्वादिरूपेणानुभूते सिद्धं तदेव यदा वाक्यीयज्ञानात्सिध्यति तदा ध्वस्ताज्ञानतज्जमकर्तृत्वाद्यात्मनाऽनुभूतमिति नानुभवविरोध इत्यर्थः ॥ १३०७ ॥

पूर्वोक्त्यैवोत्तरेषां च दोषाणां परिहारतः ॥
परिहारान्तरं तस्मान्न वाच्यं तत्प्रसिद्धितः ॥ १३०८ ॥

किमु तद्ब्रह्म यद्द्वैधमित्येतत्परिहृत्य किंचापि तद्वेदित्येतदपि पूर्वचोद्यनिरासेनैव निरस्तमित्याह । पूर्वेति । पूर्वचोद्यपरिहारोक्त्यैवोत्तरचोद्यस्यानवस्थादिदोषाणां परिहारात्परिहारान्तरमत्र न वाच्यं तदतिरेकेणेह परिहारसिद्धेरिति योजना ॥ १३०८ ॥

प्रतीचोऽर्थस्य ज्ञेयत्वादनवस्था च नेष्यते ॥
अकारकस्य कौटस्थ्याद्विरोधो नाऽऽत्मदर्शने ॥ १३०९ ॥

कथं पूर्वेणोत्तरस्य परिहृतत्वं तत्राऽऽह । प्रतीच इति । आत्मनोऽद्वयत्वात्तस्यैव वेद्यत्वान्नानवस्था न च निर्निमित्तं तस्य ब्रह्मत्वं स्वाभाविकत्वेऽपि विना ज्ञानमव्यक्तेरतो निर्निमित्तस्येत्याद्ययुक्तमित्यर्थः । यत्तु क्रियाविरोध इत्यादि तत्राऽऽह । अकारकस्येति । क्रियाकारकादिभेदशून्यस्याऽऽत्मनः स्वदृष्टौ कर्तृत्वाद्यभावाद्वस्तुतो न क्रियाविरोधो न च ब्रह्मणो ज्ञानसाध्यत्वं कौटस्थ्यादित्यर्थः ॥ १३०९ ॥

घटादिमेयसाधर्म्ये निषेधोऽपि श्रुतीरितः ॥
यथोक्तावगमत्वं तु न कथंचिन्निवार्यते ॥ १३१० ॥

यत्तु श्रुत्यन्तरविरोधश्चेत्यादि तत्राऽऽह । घटादीति । योऽर्थः सत्यं ज्ञानं विज्ञातारमरे केनेत्यादिश्रुत्युक्तः सोऽपि घटादेरिव ब्रह्मणः स्फूर्तिव्याप्यत्वनिषेधो न वृत्तिव्याप्यत्वनिषेधोऽन्यथौपनिषदत्वव्याघातादतो ब्रह्मविषयवृत्त्युपगमे न श्रुतिविरोध इत्यर्थः । तर्हि वृत्तिव्याप्यत्वाद्घटवद्ब्रह्मणः स्फूर्तिव्यापिताऽपि स्यादित्याशङ्क्य कूटस्थस्फूर्तित्वं शास्त्रानुभवसिद्धं दुर्वारमिति नास्य तद्व्याप्यतेत्याह । यथोक्तेति ॥ १३१० ॥

तस्मान्न कश्चिदप्यत्र कार्त्स्न्येनात्मावगमे भवेत् ॥
दोषोऽतः सांप्रतं भाष्यग्रन्थं व्याचक्ष्महे स्फुटम् ॥ १३११ ॥

यत्पुनरित्यादिबहुदोषत्वादित्यादि तत्राऽऽह । तस्मादिति । अज्ञाते ब्रह्मणि प्रेप्साप्रमाणप्रवृत्त्यो सम्भवादज्ञानध्वस्तेश्च मानफलत्वात्पूर्णसदेकरसस्वप्रकाशब्रह्मणो वेदान्तागमे न कश्चिद्दोषोऽस्तीत्यर्थः । उपोद्घातोक्तदोषान्परिहृत्य तस्माद्यत्प्रविष्टमित्यादिभा-

---

१ ख वाक्यीयज्ञा°। २ ग °धर्म्येति°।

अनुभूतेस्तदज्ञातं सिद्धं ब्रह्म पुरा मितेः ॥
अपास्ताज्ञानतत्कार्यं वस्तु मानात्प्रसिध्यति ॥ १३०७ ॥

यत्तु स्वानुभूतिविरोधोऽपीति तत्राऽऽह । अनुभूतेरिति । वाक्योत्थज्ञानात्पूर्वं यदज्ञातं ब्रह्म तत्कर्तृत्वादिरूपेणानुभूतेः सिद्धं तदेव यदा वाक्यीयज्ञानात्सिध्यति तदा ध्वस्ताज्ञानतज्जभकर्तृत्वाद्यात्मनाऽनुभूतमिति नानुभवविरोध इत्यर्थः ॥ १३०७ ॥

पूर्वोक्त्यैवोत्तरेषां च दोषाणां परिहारतः ॥
परिहारान्तरं तस्मान्न वाच्यं तत्प्रसिद्धितः ॥ १३०८ ॥

किमु तद्ब्रह्म यद्वेद्यमित्येतत्परिहृत्य किंचापि तद्वेदित्येतदपि पूर्वचोद्यनिरासेनैव निरस्तमित्याह । पूर्वेति । पूर्वचोद्यपरिहारोक्त्यैवोत्तरचोद्यस्यानवस्थादिदोषाणां परिहारात्परिहारान्तरमत्र न वाच्यं तद्व्यतिरेकेणेह परिहारसिद्धेरिति योजना ॥ १३०८ ॥

प्रतीचोऽर्थस्य ज्ञेयत्वादनवस्था च नेष्यते ॥
अकारकस्य कौटस्थ्याद्विरोधो नाऽऽत्मदर्शने ॥ १३०९ ॥

कथं पूर्वेणोत्तरस्य परिहृतत्वं तत्राऽऽह । प्रतीच इति । आत्मनोऽद्वयत्वात्तस्यैव मेयत्वात्तानवस्था न च निर्निमित्तं तस्य ब्रह्मत्वं स्वाभाविकत्वेऽपि विना ज्ञानमव्यक्तेरतो निर्निमित्तस्येत्याद्ययुक्तमित्यर्थः । यत्तु क्रियाविरोध इत्यादि तत्राऽऽह । अकारकस्येति । क्रियाकारकादिभेदशून्यस्याऽऽत्मनः स्वदृष्टौ कर्तृत्वाद्यभावाद्वस्तुतो न क्रियाविरोधो न च ब्रह्मणो ज्ञानसाध्यत्वं कौटस्थ्यादित्यर्थः ॥ १३०९ ॥

घटादिमेयसाधर्म्ये निषेधोऽपि श्रुतीरितः ॥
यथोक्तावगमत्वं तु न कथंचिन्निवार्यते ॥ १३१० ॥

यत्तु श्रुत्यन्तरविरोधश्चेत्यादि तत्राऽऽह । घटादीति । योऽर्थः सत्यं ज्ञानं विज्ञातारमरे केनेत्यादिश्रुत्युक्तः सोऽपि घटादेरिव ब्रह्मणः स्फूर्तिव्याप्यत्वनिषेधो न वृत्तिव्याप्यत्वनिषेधोऽन्यथौपनिषदत्वव्याकोपादतो ब्रह्मविषयवृत्त्युपगमे न श्रुतिविरोध इत्यर्थः । तर्हि वृत्तिव्याप्यत्वाद्घटवद्ब्रह्मणः स्फूर्तिव्यापिताऽपि स्यादित्याशङ्क्य कूटस्थस्फूर्तित्वं शास्त्रानुभवसिद्धं दुर्वारमिति नास्य तद्व्याप्यतेत्याह । यथोक्तेति ॥ १३१० ॥

तस्मान्न कश्चिदप्यत्र कात्स्न्यात्मावगमे भवेत् ॥
दोषोऽतः सांप्रतं भाष्यग्रन्थं व्याचक्ष्महे स्फुटम् ॥ १३११ ॥

यत्पुनरित्यादिबहुदोषत्वादित्यादि तत्राऽऽह । तस्मादिति । अज्ञाते ब्रह्मणि प्रेप्साप्रमाणप्रवृत्त्योः संभवादज्ञानध्वस्तेश्च मानफलत्वात्पूर्णसदेकरसस्वप्रकाशब्रह्मणो वेदान्तागमे न कश्चिद्दोषोऽस्तीत्यर्थः । उपोद्घातोक्तदोषान्परिहृत्य तस्माद्यत्प्रविष्टमित्यादिभा-

१ ख. वाक्यीयज्ञा° । २ ग. °पर्ययेनि° ।

भ्यमवतारयति । अत इति । परिशङ्कितदोषाभावादिति यावत् । परकीयचोद्यनिरासानन्तरं भाष्यव्याख्यावसरं दर्शयति । सांप्रतमिति ॥ १३११ ॥

यत्सृष्ट्वा ब्रह्म पूर्वोक्तं स्वात्ममोहैकवर्त्मना ॥
कार्यं चैतन्यबिम्बेन प्रविष्टं जलचन्द्रवत् ॥ १३१२ ॥

तदक्षराणि योजयति । यदित्यादिना । पूर्वोक्तमव्याकृतप्रक्रियायामिति शेषः । स्वात्ममोहैकवर्त्मना सृष्टिरिति संबन्धः । प्रवेशवाक्योक्तं स्मारयति । कार्यमिति ॥ १३१२ ॥

ब्रह्मेतिब्रह्मशब्देन तदेवात्राभिधीयते ॥
तस्य योऽतिशयः प्रोक्तो व्याकृताव्याकृतात्मकः ॥
इदमित्युच्यते ब्रह्म तदुपाधिस्वभावकम् ॥ १३१३ ॥

यत्पदापेक्षितं पूरयति । ब्रह्मेतीति । वाक्यं समर्थं । इदं शरीरस्थमित्यादेस्तात्पर्यमाह । तस्येति । कूटस्थस्य ब्रह्मणो यः कार्यकारणाख्योऽतिशयोऽव्याकृतप्रक्रियायामुक्तस्तत्र देहद्वयात्मकोपाध्यावच्छेदे स्थितं ब्रह्मेदंशब्दितमित्यर्थः ॥ १३१३ ॥

वैशब्दोऽवधृतौ ज्ञेयो ब्रह्मैव न तदन्यथा ॥
अनिर्ज्ञातात्मतत्त्वं सद्ब्रह्मैवावभाति तत् ॥ १३१४ ॥

प्रकृतस्याऽऽत्मकात्स्न्यस्येत्यत्र प्रकृतार्थस्य वैशब्दः स्मृत्यर्थ उक्तोऽधुना भाष्यमनुसृत्यार्थान्तरमाह । वैशब्द इति । अवधृतिमेवाऽऽह । ब्रह्मेति । यदीदं सर्वं जगद्ब्रह्मैव तर्हि कथमन्यत्वधीरित्याशङ्क्याऽऽह । अनिर्ज्ञातेति ॥ १३१४ ॥

यदिदंशब्दधीगम्यं सम्यग्ज्ञानोदयात्पुरा ॥
अपि ब्रह्मैव तत्कृत्स्नं तन्मोहादतथेक्ष्यते ॥ १३१५ ॥

इदंशब्दार्थमनूद्याग्रे प्रागित्यादिभाष्यं व्याचष्टे । यदिदमिति ॥ १३१५ ॥

रज्जुवच्चदविज्ञानात्सर्पदण्डादिनेक्ष्यते ॥
ब्रह्मेदमात्रश्रवणात्कुतोऽग्र इति भण्यते ॥ १३१६ ॥

सम्यग्ज्ञानात्प्रागूर्ध्वं चेदं सर्वं जगद्ब्रह्मैव तथाऽपि तदज्ञानादब्रह्मेव भातीत्यत्र दृष्टान्तमाह । रज्जुवदिति । यथा रज्जुः स्वाज्ञानाद्भुजगाद्यात्मना गृह्यते तथा ब्रह्माज्ञानादब्रह्मेव दृश्यत इत्यर्थः । अग्रशब्दमाक्षिपति । ब्रह्मेति । ब्रह्म वेदं वाऽन्यद्वाऽत्र प्रतियोग्याद्ये तस्मादग्रे तदेवाऽऽसीदिति व्याघातो द्वितीये चानुपाधाभावाद्भिप्रयोगो न तृतीयोऽस्मिन्वाक्ये तदश्रुतेरतः प्रतियोग्यभावादग्र इत्ययुक्तमित्यर्थः । उत्तरमाह । भण्यत इति ॥ १३१६ ॥

सृष्टान्तजगतो व्यक्तेः प्राक्तनः काल उच्यते ॥
यद्वै तदिति तच्चापि स्पष्टमूर्ध्वं प्रवक्ष्यते ॥ १३१७ ॥

कल्पितस्य जगतोऽकल्पितात्मत्वात्तद्व्यक्तिरात्मैक्यधीस्तदुदयात्पूर्वकालोऽग्रशब्दार्थ इत्याह । सूत्रेति । सूत्रं तत्कारणमव्याकृतं तदन्ते यस्येति तद्गुणसंविज्ञानेन सर्वं जगदुक्तं तस्येति यावत् । किं चोक्ते काले सर्वस्य यद्ब्रह्ममात्रत्वं तदुत्तरत्रापि स्वापाधिकारे यद्वै तन्नेत्यत्र वक्ष्यत इति वाक्यशेषं संवादयति । यदिति ॥ १३१७ ॥

नाविद्यासंगतिस्तत्र तद्कार्यत्वहेतुतः ॥
तमोजस्यापि कार्यस्य न प्रतीच्यस्त्यकारणात् ॥ १३१८ ॥

अत्रोक्तस्योत्तरत्रोक्तेरेव स्पष्टमिदमर्थस्याव्याकृतादेर्ब्रह्मत्वे ब्रह्मणोऽप्यव्याकृतादित्वं स्यादित्याशङ्क्याव्याकृतास्याविद्यातादात्म्ययोगो न ब्रह्मण्यस्ति तस्याविद्याकार्यत्वाभावात्स्वकार्येणैव तस्यास्तादात्म्यादित्याह । नेत्यादिना । व्याकृतास्यतत्कार्यस्यापि ब्रह्ममात्रत्वाङ्गीकारात्कुतो ब्रह्मणस्तत्कार्यत्वाभावस्तत्राऽऽह । तमोजस्येति । अज्ञानजस्यापि न ब्रह्मण्यभेदेन संगतिस्तस्य स्वकारणेनाभेदाद्ब्रह्मणश्चाकारणत्वात्कार्यकारणान्यत्वश्रुतेरविद्यया च तत्कारणतेति स्थितेरित्यर्थः ॥ १३१८ ॥

प्रत्यक्तयाऽऽत्मसंबन्धान्मोहादेश्चिन्निभात्मता ॥
आविच्छेपादतो नासौ मृषा स्याद्धर्मकार्यवत् ॥ १३१९ ॥

तर्हि कथमिदमो मोहादेर्ब्रह्ममात्रत्वं तत्राऽऽह । प्रत्यक्तयेति । कल्पितमोहादेरूपत्वेनाधिष्ठानस्याऽऽत्मनस्तेन संबन्धाचस्य सदा चिदाभासप्रस्ततेत्यर्थः । किंच मोहादेर्ब्रह्मणश्चाभेदेऽपि ब्रह्मैव शिष्यते नान्यदित्याह । आविच्छेपादिति । मोहादेः सर्वस्याऽऽभिमुख्येन चिन्मात्रत्वेन शेषान्नाभेदेऽपि ब्रह्मणस्तद्रूपतेत्यर्थः । मोहादे ब्रह्मत्वं न तस्य मोहादित्वमिति स्थिते फलितमाह । अत इति । चितोऽपि कल्पितत्वेऽधिष्ठानाभावान्निरधिष्ठानकल्पनायोगोऽत शब्दार्थ । असाविति चिदुक्तिः । धर्मादिकार्ये द्वैतं वैधर्म्यदृष्टान्तः ॥ १३१९ ॥

प्रत्यग्याथात्म्यसंबोधान्नान्यो हेतुः समीक्ष्यते ॥
निरन्वयविनाशाय योऽस्य संसाररूपिणः ॥ १३२० ॥

कार्यकारणात्मक जगदध्यस्तं चेत्कुतोऽस्य निवृत्तिरित्याशङ्क्याऽऽह । प्रत्यगिति । आत्मनि सम्यग्ज्ञानादेवानर्थस्याऽऽत्यन्तिको ध्वंसो हेत्वन्तरस्याप्रामाणिकत्वादित्यर्थः ॥ १३२० ॥

कौटस्थ्यासंगतो नास्य मोहतत्कार्यसंगतिः ॥
स्वतः सेद्धुमशक्तत्वान्मोहादेरात्मसंगतेः ॥ १३२१ ॥

प्रत्यक्तत्त्वविद्यया द्वैतस्य ध्वस्तियोग्यत्वं साधयति । कौटस्थ्येति । प्रतीचोऽस्य कौटस्थ्यादसङ्गत्वाच्च न मोहादिना वस्तुतो योगो न च स्वातन्त्र्येण तत्सिद्धिर्जडस्य

१ ख. °धिकरणे य° । २ ख. °विद्यया त्व° ।

तदनुपपत्तेरतस्तस्याऽऽत्मनि काल्पनिकी शुक्तिरित्यात्मविषयाऽऽत्यन्तिकी तद्ध्वस्तिरित्यर्थः ॥ १३२१ ॥

कार्ष्ण्येनेव वियद्योगः स्ववृत्तापेक्षया त्वसन् ॥
आत्मनैवं तमोयोगो नाऽऽत्मवृत्तानुरोधतः ॥ १३२२ ॥

आत्मनि कल्पिता मोहादियुक्तिरित्येतद्दृष्टान्तेनाऽऽह । कार्ष्ण्येनेति । तमःशब्देन तत्कार्यमपि लक्षितम् ॥ १३२२ ॥

अन्यतः संगतिः सेयमविचारितसिद्धिका ॥
अविज्ञातचिदुत्सङ्गसंस्थैवेयं न वस्तुनि ॥ १३२३ ॥

आत्मानात्मयोगस्य कल्पितत्वमुपसंहरति । अन्यत इति । अन्येनानात्मनाऽऽत्मनः संगतिश्चेत्कथमात्मवृत्तापेक्षया सा नास्तीत्याशङ्क्याज्ञातात्मस्थैवान्ययुक्तिर्न शुद्धात्मस्येत्याह । अविज्ञातेति । उत्सङ्गपदमूलदेशार्थम् ॥ १३२३ ॥

अविद्याद्वारिकाऽप्यस्य संगतिर्नाञ्जसेष्यते ॥
निरात्मकपरार्थत्वहेतुभ्यां शुक्तिरूप्यवत् ॥ १३२४ ॥

अज्ञातात्मस्था चेदज्ञानादियुक्तिरंशतश्चाऽऽश्रयविषयत्वयोरापत्तिरित्याशङ्क्याऽऽह । अविद्येति । यथा वस्तुवृत्तमपेक्ष्य नाऽऽत्मन्यज्ञानादिसंगतिरेवमविद्यावृत्तापेक्ष्याऽपि नासाविष्यते निरात्मकत्वात्परार्थत्वादज्ञानतत्कार्ययोस्तदीयसंगतेः स्वतोऽसिद्धेरतोऽविचारसुन्दरैषा शुक्तिरूप्यसंगतिवदुत श्रोत्ररूपयोः संबन्धवदनुपपत्तेरेवेत्यर्थः ॥१३२४॥

प्रत्यग्व्यतिरेकेण नान्यद्रूपमनात्मनः ॥
यादिभिर्युक्तिभिः शक्यं कचित्साधयितुं सदा ॥ १३२५ ॥

अनात्मनो न निरात्मकत्वमात्मातिरेकेण वादिभिस्तस्य वस्तुत्वाङ्गीकारादित्याशङ्क्याऽऽह । प्रत्यगिति । विमतं न स्वातन्त्र्येण सदनात्मत्वाद्रूप्यवदित्यर्थः । प्रातीतिकं रूपान्तरं स्वीकर्तुं युक्तिभिरित्युक्तम् । कचिल्लोके शास्त्रे चेत्यर्थः । सदेति कालत्रयं निर्दिश्यते । विमतं स्वातन्त्र्येणासद्व्यभिचारित्वात्संमतवदित्यर्थः ॥ १३२५ ॥

कूटस्थादितमोन्तेन नित्यमव्यतिरेकतः ॥
बुद्ध्यादेर्विषयान्तस्य नित्यमेतदतो जगत् ॥ १३२६ ॥

विमतं ब्रह्मणोऽन्यदनिर्वाच्यत्वात्तद्वदिति व्यतिरेकिणा जगतोऽर्थान्तरत्वमाशङ्क्य हेतुप्रतिज्ञयोर्मिथो व्याहतिमभिप्रेत्याऽऽह । कूटस्थादीति । कूटस्थश्च सर्वस्य मूलत्वेनाऽऽदिश्चाज्ञानाविष्टतया तमोन्तश्च तेनाऽऽत्मना सदा सर्वस्याव्यतिरेकादसत्त्वनिरासान्नित्यं जगत्सदेव सोम्येत्यादिश्रुतेरतो बहिरजगतस्य जगतोऽनिर्वाच्यतया ब्रह्मणोऽन्यत्वव्याघातादागमविरोधाच्च नोक्तानुमेत्यर्थः ॥ १३२६ ॥

---

१ ख. कार्त्स्न्येने° । २ ख. कार्त्स्न्येने° । ३ क. ग. शुक्तिरूप्यत् ।

अतोऽविद्यामहानिद्रासंवीतमनसामसौ ॥
जन्मादिविक्रियापङ्क्तं स्वप्नदर्शनविभ्रमः ॥ १३२७ ॥

जगतो जन्मादिदृष्टेर्ब्रह्मणोऽर्थान्तरत्वसिद्धिरित्याशङ्क्य तस्य ब्रह्माव्यतिरेकित्वेन सत्त्वस्य श्रौतत्वाज्जन्मादिधीः स्वप्नधीवद्भ्रान्तिरित्याह । अत इति । जन्मादिरूपविक्रियापङ्क्तिमधिकृत्य स्वप्नदर्शनवद्विभ्रमो जगत्यविवेकिनामिति योजना ॥ १३२७॥

यथा व्याख्यातवाक्यार्थप्रथानोऽसंहतोऽप्ययम् ॥
सर्वप्रमाणभाक्तद्वत्प्रमाणाभासभागपि ॥ १३२८ ॥

सर्वस्य द्वैतस्य मायामात्रत्वे मानतदाभासानामाश्रयो विषयश्च क स्यादित्याशङ्क्याऽऽह । यथेति । वस्तुतोऽसंहतस्यासङ्गचिदेकतानस्य प्रमाविषयस्य प्रतीचो व्याकृताव्याकृतजगदुपहितस्य प्रमाणतदाभासविषयत्वोपपत्तिरित्यर्थः ॥ १३२८ ॥

अविचारितसंसिद्धि तमोवत्स्यात्तदुद्भवम् ॥
कृत्स्नं जगदतो मोहध्वस्तौ ध्वस्तं भवेच्चितिः ॥ १३२९ ॥

असंहतस्य द्वैतोपाधित्वं व्याहतमित्याशङ्क्योपाधेरवस्तुत्वान्नैवमित्याह । अविचारितेति । अज्ञानवत्तज्जन्यद्वैतस्य मिथ्यात्वे फलितमाह । अत इति । ज्ञानादज्ञानध्वस्तौ तज्जत्वाद्ध्वस्तं जगच्चितिरेव स्यादित्यर्थः ॥ १३२९ ॥

भिन्नमातृप्रमाणादौ कार्यकारणवस्तुनि ॥
अभिन्नमातृमानादिरात्मैवैकोऽद्वयः स्वतः ॥ १३३० ॥

प्रतीचोऽसंहतस्य संहतत्वमापाद्य मानतदाभासविषयत्वे मेयत्वापत्तिरित्याशङ्क्याप्रमेयत्वं प्रतिपादयन्नाह । भिन्नेति । प्रपञ्चे प्रमात्रादिभेदभाजि प्रमेये सत्यात्मैव तद्भेदरहितः सदद्वयत्वादनपेक्षः स्वतः स्फुरत्यतो नास्य प्रमेयतेत्यर्थः ॥ १३३० ॥

न देशकालावस्थादावपेक्षाऽस्त्यात्मनः स्वतः ॥
अनन्यापेक्षसंसिद्धेर्देशादेस्तदपेक्षतः ॥ १३३१ ॥

आत्मा नाद्वयो देशाद्यपेक्षत्वाद्घटवदित्याशङ्क्याऽऽह । नेति । आदिपदेनोत्पादकज्ञापकग्रहः । आत्मनो नैरपेक्ष्ये हेतुमाह । अनन्येति । निरुपाध्यात्मनः स्वारस्येन स्वतः सत्त्वस्फूर्त्योः सत्त्वादित्यर्थः । तत्रैव हेत्वन्तरमाह । देशादेरिति । न हि जडस्याजडापेक्षां विना सिद्धिर्न च वैपरीत्यमजाड्यव्याघातादिति भावः ॥ १३३१ ॥

देशकालनिमित्तादिष्वपेक्षं वस्तु यद्भवेत् ॥
तदेव तदपेक्षं स्यान्न तु देशादिसिद्धिदम् ॥ १३३२ ॥

देशाद्यपेक्षत्वहेतोरसिद्धिमुक्त्वा कार्यत्वोपाधिमाह । देशेति । देशकालौ निमित्ते आदिपदेन कारणान्तरोक्तिस्तदपेक्षं यद्वस्तु यदि जायते तदेव देशाद्यपेक्षं सद्भवेत् स्यादिति योजना । साधनव्याप्तिं शङ्कित्वाऽऽह । न त्विति । न हि देशादिसाधकस्याऽऽत्मनस्तदपेक्षया

कार्यत्वं प्रागेव ततः सिद्धत्वाद्विभक्तं कार्यमित्यन्वये घटाद्युदाहरणमकार्यमविभक्तमिति व्यतिरेके च प्रतिपाद्यात्मा तथाच न तस्यापि विभक्तत्वं घटकदनात्मत्वादिप्रसङ्गादिति भावः ॥ १३३२ ॥

प्रमात्राद्युत्थितेरग्रे ब्रह्मैवाऽऽसीद्यथोदितम् ॥
यतस्ततो न साध्यं तज्ज्ञानकर्मादिसाधनैः ॥ १३३३ ॥

इदं ब्रह्मेतिसामानाधिकरण्यलब्धमर्थमुपपाद्य वाक्यार्थमुपसंहरति । प्रमात्रादीति । उत्थितिस्तस्याभिव्यक्तिः । सप्रपञ्चचैतन्यस्य सदैवाप्रपञ्चब्रह्मत्वं परामृशति । यत इति । ततो हेतोस्तद्ब्रह्मत्वं न साधनायत्तमिति परमतनिरासं निगमयति । तत इति । आदिशब्दो भावनार्थः ॥ १३३३ ॥

ब्रह्मापि तत्स्वतः साक्षात्तदबोधैकहेतुतः ॥
इदंरूपं समापेदे रज्जुरिवाहिरूपताम् ॥ १३३४ ॥

जगतो ब्रह्मत्वे कथं तद्विपरीतपरिच्छिन्नरूपतेत्याशङ्क्य मायावशादित्यसकृदुक्तमित्याह । ब्रह्मापीति । तदिति जगदुक्तिः । साक्षादिति ब्रह्मणः शुद्धतोच्यते । स्वतो मायां विनेत्येतद्वास्तवं वृत्तमनूद्याऽऽविद्यकं कथयति । तदबोधेति । कथमबोधादपि विरुद्धाकारता तत्राऽऽह । रज्जुरिवेति ॥ १३३४ ॥

अविद्याफलकारूढं तदेवंरूपकं परम् ॥
ब्रह्म विद्याधिकारित्वं द्वैविध्यात्प्रतिपद्यते ॥ १३३५ ॥

जगतो ब्रह्ममात्रत्वेऽपि चेतनोऽन्योऽन्यथा तज्ज्ञानाधिकार्यभावात्तदसिद्धेरित्याशङ्क्याऽऽह । अविद्येति । एवंरूपकमन्तःकरणाद्युपाधिकमित्यर्थः । परं हि ब्रह्मानाद्यविद्याख्यं फलकमधिरोहति तदेव पुनरन्तःकरणादिभिरुपधीयते तच्च द्वैविध्याधिकारित्वं गच्छतीत्यर्थः ॥ १३३५ ॥

स्वतो मुक्तं यतस्तस्माद्ब्रह्म विद्यां तदर्हति ॥
संसारित्वमविद्यातो मुमुक्षुत्वं ततो भवेत् ॥ १३३६ ॥

द्वैविध्यमेवाऽऽह । स्वत इति । एकमेव ब्रह्म स्वतो मुक्तत्वाद्विद्यालम्बनमविद्यया बद्धत्वाच्च तद्ध्वस्तिहेत्वधिकारीत्यर्थः । एतेनानेकजीववादिनामश्रुतशास्त्रत्वमादर्शितम् ॥ १३३६ ॥

अध्यात्ममधिभूतं च तथा चैवाधिदैवतम् ॥
परं तदभिमानेद्धं तच्छब्देनाभिधीयते ॥ १३३७ ॥

ब्रह्मेत्यादिवाक्यं व्याख्यायोत्तरवाक्यस्थतच्छब्दार्थमाह । अध्यात्ममिति । तत्परं सृष्ट्वा ब्रह्माध्यात्मादौ सृष्टे प्रविष्टं तत्र तत्राहंममाभिमानेनाऽऽविष्टेन ग्रस्तं तदात्मानमित्यत्र तच्छब्दितत्त्वंपदवाच्यमित्यर्थः ॥ १३३७ ॥

१ घ. °दविति । २ क. °ह्मभावत्वे° । ३ ख. यत्परं ।

हिरण्यगर्भतां नीत्वा कृत्स्नमध्यात्मरूपकम् ॥
तस्मै हिरण्यगर्भाय ब्रूयाद्विद्यां तमस्विने ॥ १३३८ ॥

किमर्थो त्वमर्थोक्तिरित्याशङ्क्य वाक्यार्थज्ञानार्थेत्याह । हिरण्यगर्भतामिति । कृत्स्नं ब्रह्माध्यात्माद्यभिमानेन प्राप्तपरिच्छेदं त्वंपदवाच्यमपरिच्छिन्नतया परिशोध्य तस्मै विविदिषवे दयालुराचार्यो विद्यामुपदिशेत्स च पदार्थज्ञस्तदुपदेशाद्वाक्यार्थं जानातीत्यर्थः ॥ १३३८ ॥

एवं निःशेषसंसारप्रत्याख्यानेन निर्वृतिम् ॥
सर्वाविद्यापनिहुत्या विद्यया प्रतिपद्यते ॥ १३३९ ॥

किमर्थं वाक्यार्थज्ञानमित्याशङ्क्य तत्फलं वक्ष्यमाणं संक्षिप्याऽऽह । एवमिति । सर्वानर्थमूलाविद्याया निहुतिर्यया विद्यया पूर्वोक्तरीत्या निर्वृत्तयाऽशेषबन्धध्वंसेन मुक्तिमाप्नोति विद्वानित्यर्थः ॥ १३३९ ॥

आत्मानात्मात्मकं विश्वं प्रत्यक्षादिप्रमाणकम् ॥
आत्मानमेव तद्वेत्तिष्ठां कार्त्स्न्यात्मनः पराम् ॥ १३४० ॥

तद्वेदेतिपदद्वयस्यार्थमुक्त्वा तदनुवादेनाऽऽत्मशब्दार्थं वदन्वाक्यं योजयति । आत्मेति । चेतनाचेतनविभक्तमप्रत्यक्षादिसिद्धं जगदन्वयव्यतिरेकाभावपरिहारेण पूर्णवस्तुन सा काष्ठा सा परा गतिरिति प्रकृष्टप्रतिष्ठारूपात्ममात्रत्वेन तद्ब्रह्म विदितवदित्यर्थः ॥ १३४० ॥

अविचारितसंसिद्धि सर्वानर्थैककारणम् ॥
प्रत्यक्त्वानेकसाक्षित्वात्तमस्तत्प्रत्यगात्मनि ॥ १३४१ ॥

ब्रह्मण स्वात्मनि स्वरूपज्ञानस्य सदा भावात्किमौपदेशिकज्ञानेनेत्याशङ्क्य तदर्थवत्त्वार्थमात्मन्यज्ञानं साधयति । अविचारितेति । तत्तमोऽनिर्वाच्यं प्रत्यगात्मनीति संबन्धः । तदनिर्वाच्यत्वसिद्ध्यर्थमाद्यं विशेषणम् । प्रतीचि तमःसत्त्वे कार्यलिङ्गकमनुमानमाह । सर्वेति । तत्रैव हेत्वन्तरमाह । प्रत्यक्त्वेति । तस्यैकस्याविद्यात्वज्ञसाक्षित्वात्तस्य चाज्ञानसंबन्धं विना सिद्धिरित्यर्थः ॥ १३४१ ॥

प्रतीच्येव यतोऽज्ञानमतस्तत्तत्त्वविद्यया ॥
सकार्ये तमसि ध्वस्त आत्मैवैकोऽवशिष्यते ॥ १३४२ ॥

आत्मन्येवाज्ञानमित्युक्तिफलमाह । प्रतीचीति । अज्ञाने प्रतीचि सिद्धे तन्निवर्तकत्वेन तत्रोपदेशजनितं ज्ञानमर्थवदिति भावः ॥ १३४२ ॥

विरक्तः सर्वसंसाराद्विविदिषुः स्वतस्ततः ॥
संसारानलसंतप्तस्त्वादिरूदं परीप्सति ॥ १३४३ ॥

ब्रह्मलोकादिपुमर्थं त्यक्त्वा मोक्षमित्यायोगादधिकार्यभावात्तत्त्वविद्यानुपपत्ते सकार्या-

ज्ञानध्वस्त्या कथमात्ममात्रावशेषसिद्धिरत आह । विरक्त इति । संसारेत्यादिना विशेषणेन नित्यानित्यवस्तुविवेकोक्तिः । ततः संसारादिति यावत् । स्वतः संसारस्वरूपवशादित्यर्थः । यद्वा स्वतः प्रकृतवैराग्यस्वभावात्प्राप्तशमादिरित्यर्थः । साधनचतुष्टयवान्वन्यविरुद्धं मुक्तिहेतुज्ञानमाप्तुमिच्छन्नधिकारीत्याह । तद्विरुद्धमिति ॥ १३४३ ॥

तस्याकृत्स्नापवादेन कृत्स्नैकात्म्यावबुद्धये ॥ १३४४ ॥
अन्वयव्यतिरेकाख्यो व्यापारो विहितः पुरा ॥
आत्मेत्येवेति विधिना पराक्प्रत्यग्विवेककृत् ॥ १३४५ ॥

तस्य किं ज्ञानसाधनमित्यपेक्षायां पूर्वोक्तं स्मारयति । तस्येति । अधिकारिणो हि प्रकृतस्य परिच्छिन्नार्थदर्शननिरासेनापरिच्छिन्नार्थदर्शनार्थमन्वयादिव्यापारो विधिसूत्रेण प्रागुक्त इत्यर्थः । अन्वयादिव्यापारस्य फलमाह । परागिति ॥ १३४४ ॥ १३४५ ॥

ऐकात्म्यं वीक्ष्यते तेन त्यक्त्वा सर्वाननात्मनः ॥
कृत्स्नमेव यतो वस्तु तदन्यत्तदबोधजम् ॥ १३४६ ॥

विवेकफलमाह । ऐकात्म्यमिति । देहादीनव्याकृतान्तानानात्मत्वेन प्राप्तान्परित्यज्य किमित्यप्रसिद्धमैकात्म्यमेव ज्ञेयमिति तत्राऽऽह । कृत्स्नमिति । अतः कृत्स्नमेव वस्तु ज्ञेयमिति शेषः ॥ १३४६ ॥

कृत्स्नं पश्येदिति ततो वाक्यं वस्तुनि वर्तते ॥
प्रविष्टोऽकृत्स्नरूपत्वात्संसारानर्थचोदितः ॥
आत्मेत्यनेन कृत्स्नात्मदर्शनाय नियुज्यते ॥ १३४७ ॥

आत्मेत्येवेति विधिना विहितोऽन्वयादिव्यापार इति ब्रुवता वाक्यस्य विधिनिष्ठत्वमिष्टमित्याशङ्क्याऽऽह । कृत्स्नमिति । विहितान्वयादिव्यापारस्यैक्यज्ञानावसानत्वाद्वाक्यं साधनविधिद्वारा वस्तुनिष्ठमित्यर्थः । वाक्यस्याद्वयवस्तुपरत्वे तज्ज्ञाने कोऽधिक्रियते न तावत्तदेवाद्वयं घटादिष्वज्ञानेष्वधिकारिणो विषयादन्यत्वान्नापि वस्त्वन्तरं तदभावान्न च निरधिकारं ज्ञानं युक्तमत आह । प्रविष्ट इति । परात्मा स्वाविद्यया बुद्ध्यादि सृष्ट्वा तत्प्रविष्टः परिच्छेदाभिमानित्वात्संसरन्कदाचिद्विवेकादियुक्तस्तज्ज्ञानेऽधिकारीति विधिनाऽधिगतमित्यर्थः ॥ १३४७ ॥

कृत्स्न आत्मेत्यतो वाक्याद्यथारूपं दिदृक्षति ॥
अन्योन्यार्थसमाश्रित्वान्न भेदोऽत्र पदार्थयोः ॥ १३४८ ॥

तस्य तर्हि पूर्वोक्तान्वयादेरेवाहं ब्रह्मेति धीसिद्धेर्वाक्यवैयर्थ्यमित्याशङ्क्याऽऽह । कृत्स्न इति । परिच्छिन्नस्य घटवदनात्मत्वादपरिच्छिन्नस्तावदात्मा तं पूर्णमात्मानं वाक्यादेवाधिकारिजिज्ञासापूर्वकमनुभवत्यन्वयादेरमानत्वादित्यर्थः । अहं ब्रह्मेति नाभेद-

१ क. वीक्षते । २ ख. परात्मा ।

